कृष्णवेत्ता कृष्णभर्त्ता कपीशः क्रोधवान् कपिः ॥ ३१

कालरात्रिः कुबेरश्च कुबेरवनपालकः ।
कुबेरधनदाता च कौसल्यानन्दजीवनः ॥ ३२

कोसलेशप्रियः केतुः कपाली कामपालकः ।
कारुण्यः करुणारूपः करुणानिधिविग्रहः ॥ ३३

कारुण्यकर्ता दाता च कपिः साध्यः कृतान्तकः ।
कूर्मः कूर्मपतिः कूर्मभर्त्ता कूर्मस्य प्रेमवान् ॥ ३४

कुक्कुटः कुक्कुटाह्वानः कुञ्जरः कमलाननः ।
कुञ्जरःकलभः केकिनादजित्कल्पजीवनः ॥ ३५

कल्पान्तवासी कल्पान्तदाता कल्पविबोधकः ।
कलभः कलहस्तश्च कम्पः कम्पपतिस्तथा ॥ ३६

कर्मफलप्रदः कर्मा कमनीयः कलापवान् ।
कमलासनबन्धश्च (कम्पः) कमलासनपूजकः ॥ ३७

कमलासनसेवी च कमलासनमानितः ।
कमलासनप्रियः कम्बुः कम्बुकण्ठोऽपि कामधुक् ॥ ३८

किञ्जल्करूपी किञ्जल्कः किञ्जल्कावनिवासकः ।
खगनाथप्रियः खड्गी खगनाथप्रहारकः ॥ ३९

खगनाथसुपूज्यश्च खगनाथप्रबोधकः ।
खगनाथवरेण्यश्च खरध्वंसी खरान्तकः ॥ ४०

खरारिप्रियबन्धुश्च खरारिजीवनः सदा ।
खड्गहस्तः खड्गधनः खड्गहानी च खड्गपः ॥ ४१

खञ्जरीटप्रियः खञ्जः(खञ्जत्राता) खेचरात्मा खरारिजित्॥ ४२

खञ्जरीटपतिः पूज्यः खञ्जरीटपचञ्चलः।
खद्योतबन्धुः खद्योतः खद्योतनप्रियः सदा॥ ४३

गरुत्मान् गरुडो गोप्यो गरुत्मद्दर्पहारकः।
गर्विष्ठो गर्वहर्ता च गर्वहा गर्वनाशकः॥ ४४

गर्वो गुणप्रियो गाणो गुणसेवी गुणान्वितः
गुणत्राता गुणरतो गुणवन्तप्रियो गुणी॥ ४५

गणेशो गणपाती च गणरूपो गणप्रियः।
गम्भीरोऽथ गुणाकारो गरिमा गरिमप्रदः॥ ४६

गणरक्षो गणहरो गणदो गणसेवितः।
गवांशो गवयत्राता गर्जितश्च गणाधिपः॥ ४७

गन्धमादनहर्ता च गन्धमादनपूजकः।
गन्धमादनसेवी च गन्धमादनरूपधृक्॥ ४८

गुरुर्गुरुप्रियो गौरो गुरुसेव्यो गुरून्नतः।
गुरुगीतापरो गीतो गीतविद्यागुरुर्गुरुः॥ ४९

गीताप्रियो गीतरातो गीतज्ञो गीतवानपि।
गायत्र्या जापको गोष्ठो गोष्ठदेवोऽथ गोष्ठपः॥ ५०

गोष्पदीकृतवारीशो गोविन्दो गोपबन्धकः।
गोवर्धनधरो गर्वो गोवर्धनप्रपूजकः॥ ५१

गन्धर्वो गन्धर्वरतो गन्धर्वानन्दनन्दितः।
गन्धो गदाधरो गुप्तो गदाढ्यो गुह्यकेश्वरः॥ ५२

गिरिजापूजको गीश्च गीर्वाणो गोष्पतिस्तथा ।
गिरिर्गिरिप्रियो गर्भो गर्भपो गर्भवासकः ॥ ५३

गभस्तिग्रासको ग्रासो ग्रासदाता ग्रहेश्वरः ।
ग्रहो ग्रहेशानो ग्राहो ग्रहदोषविनाशनः ॥ ५४

ग्रहारूढो ग्रहपतिर्ग्रहणो ग्रहणाधिपः ।
गोली गव्यो गवेशश्च गवाक्षमोक्षदायकः ॥ ५५

गणो गम्यो गणदाता गरुडध्वजवल्लभः ।
गेहो गेहप्रदो गम्यो गीतागानपरायणः ॥ ५६

गह्वरो गह्वरत्राणो गर्गो गर्गेश्वरप्रदः ।
गर्गप्रियो गर्गरतो गौतमो गौतमप्रदः ॥ ५७

गङ्गास्नायी गयानाथो गयापिण्डप्रदायकः ।
गौतमीतीर्थचारी च गौतमीतीर्थपूजकः ॥ ५८

गणेन्द्रोऽथ गणत्राता ग्रन्थदो ग्रन्थकारकः ।
घनाङ्गो(घो)घातको घोरो घोररू पी घनप्रदः ॥ ५९

घोरदंष्ट्रो घोरनखो घोरघाती घनेतरः ।
घोरराक्षसघाती च घोररूप्यघदर्पहा ॥ ६०

घर्मो घर्मप्रदश्चैव घर्मरूपी घनाघनः ।
घनध्वनिरतो घण्टावाद्यप्रियघृणाकरः ॥ ६१

घोघो घनस्वनो घूर्णो घूर्णितोऽपि घनालयः ।
ङकारो ङप्रदो ङान्तश्चन्द्रिकामोदमोदकः ॥ ६२

चन्द्ररूपश्चन्द्रवन्द्यश्चन्द्रात्मा चन्द्रपूजकः ।
चन्द्रप्रेमश्चन्द्रबिम्बश्चामरप्रियःचञ्चलः ॥ ६३

चन्द्रवक्त्रश्चकोराक्षश्चन्द्रनेत्रश्चतुर्भुजः ।
चञ्चलात्मा चरश्चर्मी चलत्खञ्जनलोचनः ॥ ६४

चिद्रूपश्चित्रपानश्च चलच्चिताचितार्चितः ।
चिदानन्दश्चितश्चैत्रश्चन्द्रवंशस्य पालकः ॥ ६५

छत्रश्छत्रप्रदश्छत्री छत्ररूपी छिदांछदः ।
छलहा छलदश्छिन्नश्छिन्नघाती क्षपाकरः ॥ ६६

छद्मरूपी छद्महारी छली छलतरुस्तथा ।
छायाकर द्युतिश्छन्दश्छन्दविद्याविनोदकः ॥ ६७

छिन्नारातिश्छिन्नपापश्छन्दवारणवाहकः ।
छन्दश्छत्रहनश्छिप्रश्छवनश्छन्मदश्छमी ॥ ६८

क्षमागारः क्षमाबन्धः क्षपापतिप्रपूजकः ।
छलघाती छिद्रहारी छिद्रान्वेषणपालकः ॥ ६९

जनो जनार्दनो जेता जितारिर्जितसञ्ज्वरः ।
जितमृत्युर्जरातीतो जनार्दनप्रियो जयः ॥ ७०

जयदो जयकर्ता च जयपातो जयप्रियः ।
जितेन्द्रियो जितारातिर्जितेन्द्रियप्रियो जयी ॥ ७१

जगदानन्ददाता च जगदानन्दकारकः ।
जगद्वन्द्यो जगज्जीवो जगतामुपकारकः ॥ ७२

जगद्धाता जगद्धारी जगद्बीजो जगत्पिता ।
जगत्पतिप्रियो जिष्णुर्जिष्णुजिज्जिष्णुरक्षकः ॥ ७३

जिष्णुवन्द्यो जिष्णुपूज्यो जिष्णुमूर्तिविभूषितः ।
जिष्णुप्रियो जिष्णुरतो जिष्णुलोकाभिवासकः ॥ ७४

जयो जयप्रदो जायो जायको जयजाड्यहा ।
जयप्रियो जनानन्दो जनदो जनजीवनः ॥ ७५

जयानन्दो जपापुष्पवल्लभो जयपूजकः ।
जाड्यहर्ता जाड्यदाता जाड्यकर्ता जडप्रियः ॥ ७६

जगन्नेता जगन्नाथो जगदीशो जनेश्वरः ।
जगन्मङ्गलदो जीवो जगत्यवनपावनः ॥ ७७

जगत्त्राणो जगत्प्राणो जानकीपतिवत्सलः ।
जानकीपतिपूज्यश्च जानकीपतिसेवकः ॥ ७८

जानकीशोकहारी च जानकीदुःखभञ्जनः ।
यजुर्वेदो यजुर्वक्ता यजुःपाठप्रियो व्रती ॥ ७९

जिष्णुर्जिष्णुकृतो जिष्णुधाता जिष्णुविनाशनः ।
जिष्णुहा जिष्णुपाती तु जिष्णुराक्षसघातकः ॥ ८०

जातीनामग्रगण्यश्च जातीनां वरदायकः ।
झुँझुरो झूझुरो झूर्झनवरो झंझानिषेवितः ॥ ८१

झिल्लीरवस्वरो ञन्तो ञवर्णों ञनतोञदः ।
टकारादिष्टकारान्तष्टवर्णाष्टप्रपूजकः ॥ ८२

टिट्टिभष्टिट्टिभस्तष्टिष्टिट्टिभप्रियवत्सलः ।
ठकारवर्णनिलयष्ठकारवर्णवासितः ॥ ८३

ठकारवीरभरितष्ठकारप्रियदर्शकः ।
डाकिनीनिरतो डङ्को डङ्किनीप्राणहारकः ॥ ८४

डाकिनीवरदाता च डाकिनीभयनाशनः ।
डिण्डिमध्वनिकर्ता च डिम्भो डिम्भातरेतरः ॥ ८५

डकाढकानवो ढक्कावाद्यष्ठकामहोत्सवः ।
णांत्यो णान्तो णवर्णश्च णसेव्यो णप्रपूजकः ॥ ८६

तन्त्री तन्त्रप्रियस्तल्पस्तन्त्रजित्तन्त्रवाहकः ।
तन्त्रपूज्यस्तन्त्ररतस्तन्त्रविद्याविशारदः ॥ ८७

तन्त्रयन्त्रजयी तन्त्रधारकस्तन्त्रवाहकः ।
तन्त्रवेत्ता तन्त्रकर्ता तन्त्रयन्त्रवरप्रदः ॥ ८८

तन्त्रदस्तन्त्रदाता च तन्त्रपस्तन्त्रदायकः ।
तत्त्वदाता च तत्त्वज्ञस्तत्त्वस्तत्वप्रकाशकः ॥ ८९

तन्द्रा च तपनस्तल्पतलातलनिवासकः ।
तपस्तपःप्रियस्तापत्रयतापी तपःपतिः ॥ ९०

तपस्वी च तपोज्ञाता तपतामुपकारकः ।
तपस्तपोत्रपस्तापी तापदस्तापहारकः ॥ ९१

तपःसिद्धिस्तपोऋद्धिस्तपोनिधिस्तपःप्रभुः ।
तीर्थस्तीर्थरतस्तीव्रस्तीर्थवासी तु तीर्थदः ॥ ९२

तीर्थपस्तीर्थकृत्तीर्थस्वामी तीर्थविरोधकः ।
तीर्थसेवी तीर्थपतिस्तीर्थव्रतपरायणः ॥ ९३

त्रिदोषहा त्रिनेत्रश्च त्रिनेत्रप्रियबालकः ।
त्रिनेत्रप्रियदासश्च त्रिनेत्रप्रियपूजकः ॥ ९४

त्रिविक्रमस्त्रिपादूर्ध्वस्तरणिस्तारणिस्तमः ।
तमोरूपी तमोध्वंसी तमस्तिमिरघातकः ॥ ९५

तमोधृक्तमसस्तप्ततारणिस्तमसोऽन्तकः ।
तमोहृत्तमकृत्ताम्रस्ताम्रौषधिगुणप्रदः ॥ ९६

तैजसस्तेजसां मूर्तिस्तेजसः प्रतिपालकः ।
तरुणस्तर्कविज्ञाता तर्कशास्त्रविशारदः ॥ ९७

तिमिंगिलस्तत्त्वकर्ता तत्त्वदाता व तत्त्ववित् ।
तत्त्वदर्शी तत्त्वगामी तत्त्वभुक्तत्त्ववाहनः ॥ ९८

त्रिदिवस्त्रिदिवेशश्च त्रिकालश्च तमिस्रहा ।
स्थाणुः स्थाणुप्रियः स्थाणुः सर्वतोऽपि च वासकः ॥ ९९

दयासिन्धुर्दयारूपो दयानिधिर्दयापरः ।
दयामूर्तिर्दयादाता दयादानपरायणः ॥ १००

देवेशो देवदो देवो देवराजाधिपालकः ।
दीनबन्धुर्दीनदाता दीनोद्धरणदिव्यदृक् ॥ १०१

दिव्यदेहो दिव्यरूपो दिव्यासननिवासकः ।
दीर्घकेशो दीर्घपुच्छो दीर्घसूत्रोऽपि दीर्घभुक् ॥ १०२

दीर्घदर्शी दूरदर्शी दीर्घबाहुस्तु दीर्घपः ।
दानवारिर्दरिद्रारिर्दैत्यारिर्दस्युभञ्जनः ॥ १०३

दंष्ट्री दण्डी दण्डधरो दण्डपो दण्डदायकः ।
दामोदरप्रियो दत्तात्रेयपूजनतत्परः ॥ १०४

दर्वीदलहुतप्रीतो दद्रुरोगविनाशकः ।
धर्मो धर्मी धर्मचारी धर्मशास्त्रपरायणः ॥ १०५

धर्मात्मा धर्मनेता च धर्मदृग्धर्मधारकः ।
धर्मध्वजो धर्ममूर्तिर्धर्मराजस्य त्रासकः ॥ १०६

धाता ध्येयो धनो धन्यो धनदो धनपो धनी ।
धनदत्राणकर्ता च धनपप्रतिपालकः ॥ १०७

धरणीधरप्रियो धन्वी धनवद्धनधारकः ।
धन्वीशवत्सलो धीरो धातृमोदप्रदायकः ॥ १०८

धात्रैश्वर्यप्रदाता च धात्रीशप्रतिपूजकः ।
धात्रात्मा च धरानाथो धरानाथप्रबोधकः ॥ १०९

धर्मिष्ठो धर्मकेतुश्च धवलो धवलप्रियः ।
धवलाचलवासी च धेनुदो धेनुपो धनी ॥ ११०

ध्वनिरूपो ध्वनिप्राणो ध्वनिधर्मप्रबोधकः ।
धर्माध्यक्षो ध्वजो धूम्रो धातुरोधिविरोधकः ॥ १११

नारायणो नरो नेता नदीशो नरवानरः ।
नन्दीसंक्रमणो नाट्यो नाट्यवेत्ता नटप्रियः ॥ ११२

नारायणात्मको नन्दी नन्दिशृंगिगणाधिपः ।
नन्दिकेश्वरवर्मा च नन्दिकेश्वरपूजकः ॥ ११३

नरसिंहो नटो नीपो नखयुद्धविशारदः ।
नखायुधो नलो नीलो नलनीलप्रमोदकः ॥ ११४

नवद्वारपुराधारो नवद्वारपुरातनः ।
नरनारयणस्तुत्यो नखनाथो नगेश्वरः ॥ ११५

नखदंष्ट्रायुधो नित्यो निराकारो निरञ्जनः ।
निष्कलङ्को निरवद्यो निर्मलो निर्ममो नगः ॥ ११६

नगरग्रामपालश्च निरन्तो नगराधिपः ।
नागकन्याभयध्वंसी नागारिप्रियनागरः ॥ ११७

पीताम्बरः पद्मनाभः पुण्डरीकाक्षपावनः ।
पद्माक्षः पद्मवक्त्रश्च पद्मासनप्रपूजकः ॥ ११८

पद्ममाली पद्मपरः पद्मपूजनतत्परः ।
पद्मपाणिः पद्मपादः पुण्डरीकाक्षसेवनः ॥ १९९

पावनः पवनात्मा च पवनात्मजः पापहा ।
परः परतरः पद्मः परमः परमात्मकः ॥ १२०

पीताम्बरः प्रियः प्रेम प्रेमदः प्रेमपालकः ।
प्रौढः प्रौढपरः प्रेतदोषहा प्रेतनाशकः ॥ १२१

प्रभञ्जनान्वयः पञ्च पञ्चाक्षरमनुप्रियः ।
पन्नगारिः प्रतापी च प्रपन्नः परदोषहा ॥ १२२

पराभिचारशमनः परसैन्यविनाशकः ।
प्रतिवादिमुखस्तम्भः पुराधारः पुरारिनुत् ॥ १२३

पराजितः परंब्रह्म परात्परपरात्परः ।
पातालगः पुराणश्च पुरातनः प्लवङ्गमः ॥ १२४

पुराणपुरुषः पूज्यः पुरुषार्थप्रपूरकः ।
प्लवगेशः पलाशारिः पृथुकः पृथिवीपतिः ॥ १२५

पुण्यशीलः पुण्यराशिः पुण्यात्मा पुण्यपालकः ।
पुण्यकीर्तिः पुण्यगीतिः प्राणदः प्राणपोषकः ॥ १२६

प्रवीणश्च प्रसन्नश्च पार्थध्वजनिवासकः ।
पिङ्गकेशः पिङ्गरोमा प्रणवः पिङ्गलप्रणः ॥ १२७

पराशरः पापहर्ता पिप्पलाश्रयसिद्धिदः ।
पुण्यश्लोकः पुरातीतः प्रथमः पुरुषः पुमान् ॥ १२८

पुराधारश्च प्रत्यक्षः परमेष्ठी पितामहः ।
फुल्लारविन्दवदनः फुल्लोत्कमललोचनः ॥ १२९

फूत्कारः फूत्करः फूश्च फूदमन्त्रपरायणः ।
स्फटिकाद्रिनिवासी च फुल्लेन्दीवरलोचनः ॥ १३०

वायुरूपी वायुसुतो वाय्वात्मा वामनाशकः ।
वनो वनचरो बालो बालत्राता तु बालकः ॥ १३१

विश्वनाथश्च विश्वं च विश्वात्मा विश्वपालकः ।
विश्वधाता विश्वकर्ता विश्ववेत्ता विशांपतिः ॥ १३२

विमलो विमलज्ञानो विमलानन्ददायकः ।
विमलोत्पलवक्त्रश्च विमलात्मा विलासकृत् ॥ १३३

बिन्दुमाधवपूज्यश्च बिन्दुमाधवसेवकः ।
बीजोऽथ वीर्यदो बीजहारी बीजप्रदो विभुः ॥ १३४

विजयो बीजकर्ता च विभूतिर्भूतिदायकः ।
विश्ववन्द्यो विश्वगम्यो विश्वहर्ता विराट्तनुः ॥ १३५

बुलकारहताराातिर्वसुदेवो वनप्रदः ।
ब्रह्मपुच्छो ब्रह्मपरो वानरो वानरेश्वरः ॥ १३६

बलिबन्धनकृद्विश्वतेजा विश्वप्रतिष्ठितः ।
विभोक्ता च वायुदेवो वीरवीरो वसुन्धरः ॥ १३७

वनमाली वनध्वंसी वारुणो वैष्णवो बली ।
विभीषणप्रियो विष्णुसेवी वायुगविर्विदुः ॥ १३८

विपद्मो वायुवंशश्च वेदवेदाङ्गपारगः ।
बृहत्तनुर्बृहत्पादो बृहत्कायो बृहद्यशाः ॥ १३९

बृहन्नासो बृहद्बाहुर्बृहन्मूर्तिर्बृहत्स्तुतिः ।
बृहद्धनुर्बृहज्जङ्घो बृहत्कायो बृहत्करः ॥ १४०

बृहद्गतिर्बृहत्पुच्छो बृहल्लोकफलप्रदः ।
बृहत्सेव्यो बृहच्छक्तिर्बृहद्विद्याविशारदः ।। १४१

बृहल्लोकरतो विद्या विद्यादाता विदिक्पतिः ।
विग्रहो विग्रहरतो व्याधिनाशी च व्याधिदः ।। १४२

विशिष्टो बलदाता च विघ्ननाशो विनायकः ।
वराहो वसुधानाथो भगवान् भवभञ्जनः ।। १४३

भाग्यदो भयकर्ता च भागो भृगुपतिप्रियः।
भव्यो भक्तो भरद्वाजो भयाङ्घ्रिर्भयनाशनः।। १४४

माधवो मधुरानाथो मेघनादो महामुनिः ।
मायापतिर्मनस्वी च मायातीतो मनोत्सुकः ।। १४५

मैनाकवन्दितामोदो मनोवेगी महेश्वरः ।
मायानिर्जितरक्षाश्च मायानिर्जितविष्टपः ।। १४६

मायाश्रयश्च निलयो मायाविध्वंसको मयः ।
मनोयमपरो याम्यो यमदुःखनिवारणः ।। १४७

यमुनातीरवासी च यमुनातीर्थचारणः ।
रामो रामप्रियो रम्यो राघवो रघुनन्दनः ।। १४८

रामप्रपूजको रुद्रो रुद्रसेवी रमापतिः ।
रावणारी रमानाथ वत्सलो रघुपुङ्गवः ।। १४९

रक्षोघ्नो रामदूतश्च रामेष्टो राक्षसान्तकः ।
रामभक्तो रामरूपो राजराजो रणोत्सुकः।। १५०

लङ्काविध्वंसको लङ्कापतिघाती लताप्रियः।
लक्ष्मीनाथप्रियो लक्ष्मीनारायणात्मपालकः ।। १५१

प्लवगाब्धिहेलकश्च लङ्केशगृहभञ्जनः ।
ब्रह्मस्वरूपी ब्रह्मात्मा ब्रह्मज्ञो ब्रह्मपालकः ॥ १५२

ब्रह्मवादी च विक्षेत्रं विश्वबीजं च विश्वदृक् ।
विश्वम्भरो विश्वमूर्तिर्विश्वाकारोऽथ विश्वधृक् ॥ १५३

विश्वात्मा विश्वसेव्योऽथ विश्वो विश्वेश्वरो विभुः।
शुक्लः शुक्रप्रदः शुक्रः शुक्रात्मा च शुभप्रदः ॥ १५४

शर्वरीपतिशूरश्च शूरश्चाथ श्रुतिश्रवाः।
शाकम्भरीशक्तिधरः शत्रुघ्नः शरणप्रदः ॥ १५५

शङ्करः शान्तिदः शान्तः शिवः शूली शिवार्चितः।
श्रीरामरूपः श्रीवासः श्रीपदः श्रीकरः शुचिः ॥ १५६

श्रीशः श्रीदः श्रीकरश्च श्रीकान्तप्रियः श्रीनिधिः ।
षोडशस्वरसंयुक्तः षोडशात्मा प्रियङ्करः ॥ १५७

षडङ्गस्तोत्रनिरतः षडाननप्रपूजकः ।
षट्शास्त्रवेत्ता षड्बाहुः षट्स्वरूपः षडूर्मिपः ॥ १५८

सनातनः सत्यरूपः सत्यलोकप्रबोधकः ।
सत्यात्मा सत्यदाता च सत्यव्रतपरायणः ॥ १५९

सौम्यः सौम्यप्रदः सौम्यदृक्सौम्यः सौम्यपालकः।
सुग्रीवादियुतः सर्वसंसारभयनाशनः ॥ १६०

सूत्रात्मा सूक्ष्मसंध्यश्च स्थूलः सर्वगतिः पुमान् ।
सुरभिः सागरः सेतुः सत्यः सत्यपराक्रमः ॥ १६१

सत्यगर्भः सत्यसेतुः सिद्धिस्तु सत्यगोचरः।
सत्यवादी सुकर्मा च सदानन्दैक ईश्वरः ॥ १६२

सिद्धिः साध्यः सुसिद्धश्च सङ्कल्पः सिद्धिहेतुकः ।
सप्तपातालचरणः सप्तर्षिगणवन्दितः ॥ १६३

सप्ताब्धिलङ्घनो वीरः सप्तद्वीपोरुमण्डलः ।
सप्ताङ्ग राज्यसुखदः सप्तमातृनिषेवितः॥ १६४

सप्तच्छन्दोनिधिः सप्त सप्तपाताल संश्रयः।
सङ्कर्षणः सहस्रास्यः सहस्राक्षः सहस्रपात्॥ १६५

हनुमान् हर्षदाता च हरो हरिहरीश्वरः ।
क्षुद्रराक्षसघाती च क्षुद्धतक्षान्तिदायकः ॥ १६६

अनादीशो ह्यनन्तश्च आनन्दोऽध्यात्मबोधकः ।
इन्द्र ईशोत्तमश्चैव उन्मत्तजन ऋद्धिदः ॥ १६७

ऋवर्णो लृपदोपेत ऐश्वर्यं औषधीप्रियः ।
औषधश्चांशुमांश्चैव अकारः सर्वकारणः ॥ १६८

इत्येतद्रामदूतस्य नाम्नां चैव सहस्रकम्।
एककालं द्विकालं वा त्रिकालं श्रद्धयान्वितः॥ १६९

पठनात्पाठनाद्वापि सर्वा सिद्धिर्भवेत्प्रिये ।
मोक्षार्थी लभते मोक्षं कामार्थी काममाप्नुयात्॥ १७०

विद्यार्थी लभते विद्यां वेदव्याकरणादिकम्।
इच्छाकामांस्तु कामार्थी धर्मार्थी धर्ममक्षयम्॥ १७१

पुत्रार्थी लभते पुत्रं वरायुस्सहितं पुमान्।
क्षेत्रं च बहुसस्यं स्याद्गावश्च बहुदुग्धदाः ॥ १७२

दुःस्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते ।
दुःखौघो नश्यते तस्य संपत्तिर्वर्द्धते चिरम्॥ १७३

चतुर्विधं वस्तु तस्य भवत्येव न संशयः।
अश्वत्थमूले जपतां नास्ति वैरिकृतं भयम्॥ १७४

त्रिकालं पठनात्तस्य सिद्धिः स्यात्करसंस्थिता।
अर्धरात्रे रवौ धृत्वा कण्ठदेशे नरः शुचिः॥ १७५

दशावर्तं पठेन्मर्त्यः सर्वान्कामानवाप्नुयात्।
भौमे निशान्ते न्यग्रोधमूले स्थित्वा विचक्षणः॥ १७६

दशावर्तं पठेन्मर्त्यः सार्वभौमः प्रजायते।
अर्कमूलेऽर्कवारे तु यो मध्याह्ने शुचिर्जपेत्॥ १७७

चिरायुः स सुखी पुत्री विजयी जायते क्षणात्।
ब्राह्मे मुहूर्ते चोत्थाय प्रत्यहं च पठेन्नरः॥ १७८

यं यं कामयते कामं लभते तं न संशयः।
संग्रामे सन्निविष्टानां वैरिविद्रावणं परम्॥ १७९

डाकिनीभूतप्रेतेषु ग्रहपीडाहरं तथा।
ज्वरापस्मारशमनं यक्ष्मप्लीहादिवारणम्॥ १८०

सर्वसौख्यप्रदं स्तोत्रं सर्वसिद्धिप्रदं तथा।
सर्वान्कामानवाप्नोति वायुपुत्रप्रसादतः॥ १८१

* * *

# श्रीहनुमत्सहस्रनामावलिः

ओं नमः। ओङ्कारनमोरूपाय। ओं नमोरूपपालकाय। ओङ्कारमयाय। ओंकारकृते। ओङ्कारात्मने। सनातनाय। ब्रह्मब्रह्ममयाय। ब्रह्मज्ञानिने। ब्रह्मणे। ब्रह्मस्वरूपविदे। कपीशाय।

कपिनाथाय । कपिनाथसुपालकाय । कपिनाथप्रियाय । कालाय । कपिनाथस्य घातकाय । कपिनाथशोक हर्त्रे । कपिभर्त्रे । कपीश्वराय नमः । (२०)

कपिजीवनदात्रे नमः । कपिमूर्तये । कपये भृताय । कालात्मने। कालरूपिणे । कालकालाय । कालभुजे । कालज्ञानिने । कालकर्त्रे । कालहानये । कलानिधये । कलानिधिप्रियाय । कर्त्रे । कलानिधि-समप्रभाय । कलापिने । कलापात्रे । कीशत्रात्रे । किशांपतये । कमलापतिप्रियाय । काकस्वरघ्नाय नमः ।।४०

कुलपालकाय नमः । कुलभर्त्रे । कुलत्रात्रे । कुलाचारपरायणाय । काश्यपाह्लादकाय । काकध्वंसिने । कर्मकृतां पतये । कृष्णाय । कृष्णस्तुतये । कृष्ण कृष्ण रूपाय । महात्मवते । कृष्णवेत्रे । कृष्णभर्त्रे। कपीशाय । क्रोधवते । कपये । कालरात्रये । कुबेराय । कुबेरवनपालकाय । कुबेरधनदात्रे नमः । ६०

कौसल्यानन्दजीवनाय नमः । कोसलेशप्रियाय । केतवे । कपालिने । कामपालकाय । कारुण्याय । करुणारूपाय । करुणानिधिविग्रहाय । कारुण्यकर्त्रे । कारुण्यदात्रे । कपये साध्याय। कृतान्तकाय । कूर्माय । कूर्मपतये । कूर्मभर्त्रे । कूर्मस्य प्रेमवते । कुक्कुटाय । कुक्कुटाह्वानाय । कुञ्जराय । कमलाननाय नमः । ८०

कुञ्जराय नमः । कलभाय । केकिनादजिते । कल्पजीवनाय । कल्पान्तवासिने । कल्पान्तदात्रे । कल्पविबोधकाय । कलभाय । कलहस्ताय । कम्पाय । कम्पपतये । कर्मफलप्रदाय । कर्मणे । कमनीयाय । कलापवते । कमलासनबन्धाय । कम्पाय । कमलासनपूजकाय । कमलासनसेविने । कमलासनमानिताय नमः । (१००)

कमलासनप्रियाय नमः । कंबवे। कम्बुकण्ठाय । कामदुहे । किञ्जल्करूपिणे । किञ्जल्काय । किञ्जल्कावनिवासकाय । खननार्थप्रियाय । खड्गिने । खगनाथप्रहारकाय । खगनाथसुपूज्याय। खगनाथ प्रबोधकाय । खगनाथवरेण्याय । खरध्वंसिने । खरान्तकाय । खरारिप्रियबन्धवे । खरारिजीवनाय । खंगहस्ताय । खड्गधनाय । खड्गहानिने नमः ।। १२०

खड्गपाय नमः । खञ्जरीटप्रियाय । खञ्जाय । (खञ्जत्रात्रे) खेचरात्मने । खरारिजिते । खञ्जरीटपतये(ति) पूज्याय । खञ्जरीटपचञ्चलाय। खद्योतबन्धवे । खद्योताय । खद्योतनप्रियाय । गरुत्मते । गरुडाय । गोप्याय । गरुत्मद्दर्पहारकाय । गर्विष्ठाय । गर्वहर्त्रे । गर्वघ्ने । गर्वनाशकाय । गर्वाय । गुणप्रियाय नमः । (१४०)

गाणाय नमः । गुणसेविने । गुणान्विताय । गुणत्रात्रे । गुणरताय । गुणवन्तप्रियाय । गुणिने । गणेशाय । गणपातिने । गणरूपाय । गणप्रियाय । गम्भीराय । गुणाकाराय । गरिम्णे । गरिमप्रदाय । गणरक्षाय । गणहराय । गणदाय । गणसेविताय । गवांशाय नमः । (१६०)

गवयत्रात्रे नमः । गर्जिताय । गणाधिपाय । गन्धमादनहर्त्रे । गन्धमादनपूजकाय । गन्धमादनसेविने । गन्धमादनरूपधृशे । गुरवे। गुरुप्रियाय । गौराय । गुरुसेव्याय । गुरून्नताय । गुरुगीतापराय। गीताय । गीतविद्यागुरवे । गुरवे। गीताप्रियाय । गीतरताय । गीतज्ञाय । गीतवते नमः । १८०

गायत्र्याजापकाय नमः । गोष्ठाय । गोष्ठदेवाय । गोष्ठपाय । गोष्पदीकृतवारीशाय । गोविन्दाय । गोपबन्धकाय । गोवर्धनधराय।

गर्वाय। गोवर्धनप्रपूजकाय। गन्धर्वाय। गन्धर्वरताय। गन्धर्वानन्द-नन्दिताय। गन्धाय। गदाधराय। गुप्ताय। गदाढ्याय। गुह्यकेश्वराय। गिरिजापूजकाय। गिरे नमः। २००

गीर्वाणाय नमः। गोष्पतये। गिरये। गिरिप्रियाय। गर्भाय। गर्भपाय। गर्भवासकाय। गभस्तिग्रासकाय। ग्रासाय। ग्रासदात्रे। ग्रहेश्वराय। ग्रहाय। ग्रहेशानाय। ग्रहाय। ग्रहदोषविनाशनाय। ग्रहारूढाय। ग्रहपतये। ग्रहणाय। ग्रहणाधिपाय। गोलिने नमः। २२०

गव्याय नमः। गवेशाय। गवाक्षमोक्षदायकाय। गणाय। गम्याय। गणदात्रे। गरुडध्वजवल्लभाय। गेहाय। गेहप्रदाय। गम्याय। गीतागानपरायणाय। गह्वराय। गह्वरत्राणाय। गर्गाय। गर्गेश्वरप्रदाय। गर्गप्रियाय। गर्गरताय। गौतमाय। गौतमप्रदाय। गङ्गास्नायिने नमः। २४०

गयानाथाय नमः। गयापिण्डप्रदायकाय। गौतमीतीर्थचारिणे। गौतमीतीर्थपूजकाय। गणेन्द्राय। गणत्रात्रे। ग्रन्थदाय। ग्रन्थकारकाय। घनाङ्गाय। घाय। घातकाय। घोराय। घोररूपिणे। घनप्रदाय। घोरदंष्ट्राय। घोरनखाय। घोरघातिने। घनेतराय। घोरराक्षसघातिने। घोररूप्यघदर्पघ्ने नमः। २६०

घर्माय नमः। घर्मप्रदाय। घर्मरूपिणे। घनाघनाय। घनध्वनिरताय। घण्टावाद्यप्रियाय। घृणाकराय। घोघाय। घनस्वनाय। घूर्णाय। घूर्णिताय। घनालयाय। ङकाराय। ङप्रदाय। ङान्ताय। चन्द्रिकामोदमोदकाय। चन्द्ररूपाय। चन्द्रवन्द्याय। चन्द्रात्मने। चन्द्रपूजकाय नमः। २८०

चन्द्रप्रेम्णे नमः । चन्द्रबिम्बाय । चामरप्रियाय । चञ्चलाय । चन्द्रवक्त्राय । चकोराक्षाय । चन्द्रनेत्राय । चतुर्भुजाय । चञ्चलात्मने। चराय । चर्मिणे । चलत्खञ्जनलोचनाय । चिद्रूपाय । चित्रपानाय। चलच्चित्तचितार्चिताय । चिदानन्दाय । चिताय । चैत्राय । चन्द्रवंशस्य पालकाय । छत्राय नमः । ३००

छत्रप्रदाय नमः । छत्रिणे । छत्ररूपिणे। छिदांछदाय । छलघ्ने। छलदाय । छिन्नाय । छिन्नघातिने । क्षपाकराय । छद्मरूपिणे । छद्महारिणे । छलिने । छलतरवे । छायाकरद्युतये । छन्दाय । छन्दविद्याविनोदकाय । छिन्नारातये । छिन्नपापाय । छन्दवारण-वाहकाय । छन्दसे नमः । ३२०

छ(क्ष)त्रहनाय । छि(क्षि)प्राय । छ(क्ष)वनाय । छन्मदाय । छ(क्ष)मिने । क्षमागाराय । क्षमाबन्धाय । क्षपापतिप्रपूजकाय । छलघातिने । छिद्रहारिणे । छिद्रान्वेषणपालकाय । जनाय । जनार्दनाय । जेत्रे । जितारये। जितसङ्गराय । जितमृत्यवे । जरातीताय । जनार्दनप्रियाय । जयाय नमः । ३४०

जयदाय नमः । जयकर्त्रे । जयपाताय । जयप्रियाय । जितेन्द्रियाय । जितारातये । जितेन्द्रियप्रियाय । जयिने । जगदानन्ददात्रे । जगदानन्दकारकाय । जगद्वन्द्याय । जगज्जीवाय। जगतामुपकारकाय । जगद्धात्रे । जगद्धारिणे । जगद्बीजाय । जगत्पित्रे । जगत्पतिप्रियाय । जिष्णवे । जिष्णुजिते नमः । ३६०

जिष्णुरक्षकाय नमः । जिष्णुवन्द्याय । जिष्णुपूज्याय । जिष्णुमूर्तिविभूषिताय । जिष्णुप्रियाय । जिष्णुरताय । जिष्णुलोकाभिवासकाय । जयाय । जयप्रदाय । जायाय । जायकाय।

जयजाड्यघ्ने । जयप्रियाय । जनानन्दाय । जनदाय । जनजीवनाय। जयानन्दाय । जपापुष्पवल्लभाय । जयपूजकाय । जाड्यहर्त्रे नमः । ३८०

जाड्यदात्रे नमः । जाड्यकर्त्रे । जडप्रियाय । जगन्नेत्रे । जगन्नाथाय । जगदीशाय । जनेश्वराय । जगन्मङ्गलदाय । जीवाय। जगत्यवनपावनाय । जगत्त्राणाय । जगत्प्राणाय । जानकीपति-वत्सलाय । जानकीपतिपूज्याय । जानकीपतिसेवकाय । जानकीशोक-हारिणे । जानकीदुःखभञ्जनाय । यजुर्वेदाय । यजुर्वक्त्रे। यजुःपाठप्रियाय व्रतिने नमः । ४००

जिष्णवे नमः । जिष्णुकृताय । जिष्णुधात्रे । जिष्णुविनाशनाय । जिष्णुघ्ने । जिष्णुपातिने । जिष्णुराक्षसघातकाय। जातीनामग्रगण्याय । जातीनां वरदायकाय। झुंझुराय । झूझुराय । झूर्झनवराय । झंझानिषेविताय । झिल्लीरवस्वराय। ञन्ताय। ञवर्णाय। ञनताय। ञदाय। टकारादये । टकारान्ताय । टवर्णाष्टप्रपूजकाय नमः । ४२०

टिट्टिभाय नमः । टिट्टिभस्तुष्टये । टिट्टिभप्रियवत्सलाय । ठकारवर्णनिलयाय । ठकारवर्णवासिताय । ठकारवीरभरिताय । ठकारप्रियदर्शकाय । डाकिनीनिरताय । डङ्काय । डाकिनीप्राणहारकाय । डाकिनीवरदात्रे । डाकिनीभयनाशनाय । डिण्डिमध्वनिकर्त्रे । डिम्भाय । डिम्भातरेतराय । डक्काढक्कानवाय । ढक्कावाद्याय । ढक्कामहोत्सवाय । णांत्याय । णान्ताय नमः । ४४०

णवर्णाय । णसेव्याय । णप्रपूजकाय । तन्त्रिणे । तन्त्रप्रियाय। तल्पाय । तन्त्रजिते । तन्त्रवाहकाय । तन्त्रपूज्याय । तन्त्ररताय । तन्त्रविद्याविशारदाय । तन्त्रयन्त्रजयिने । तन्त्रधारकाय। तन्त्रवाहकाय । तन्त्रवेत्त्रे । तन्त्रकर्त्रे । तन्त्रयन्त्रवरप्रदाय । तन्त्रदाय । तन्त्रदात्रे । तन्त्रपाय नमः । ४६०

तन्त्रदायकाय नमः । तत्त्वदात्रे । तत्वज्ञाय । तत्त्वाय । तत्त्वप्रकाशकाय । तन्द्रायै । तपनाय । तल्पतलातलनिवासकाय । तपसे । तपःप्रियाय । तापत्रयतापिने । तपःपतये । तपस्विने । तपोज्ञात्रे । तपतामुपकारकाय । तपसे । तपोत्रपाय । तापिने । तापदाय । तापहारकाय नमः । ४८०

तपःसिद्धये नमः । तपोऋद्धये । तपोनिधये । तपःप्रभवे । तीर्थाय । तीर्थरताय । तीव्राय । तीर्थवासिने । तीर्थदाय । तीर्थपाय । तीर्थकृते । तीर्थस्वामिने । तीर्थविरोधकाय । तीर्थसेविने । तीर्थपतये । तीर्थव्रतपरायणाय । त्रिदोषघ्ने । त्रिनेत्राय । त्रिनेत्रप्रियबालकाय । त्रिनेत्रप्रियदासाय नमः । ५००

त्रिणेत्रप्रियपूजकाय नमः । त्रिविक्रमाय । त्रिपादूर्ध्वाय । तरणये । तारणये । तमसे । तमोरूपिणे । तमोध्वंसिने । तमस्तिमिरघातकाय । तमोघृषे । तमसस्तसतारणये । तमसोऽन्तकाय । तमोहृते । तमकृते । ताम्राय । ताम्रौषधिगुणप्रदाय । तैजसाय । तेजसांमूर्तये । तेजसः प्रतिपालकाय । तरुणाय नमः । ५२०

तर्कविज्ञात्रे नमः । तर्कशास्त्रविशारदाय । तिमिङ्गिलाय । तत्वकर्त्रे । तत्वदात्रे । तत्वविदे । तत्वदर्शिने । तत्वगामिने । तत्वभुजे । तत्ववाहनाय । त्रिदिवाय । त्रिदिवेशाय । त्रिकालाय । तमिस्रघ्ने । स्थाणवे । स्थाणुप्रियाय । स्थाणवे । सर्वतोऽपि च वासकाय । दयासिन्धवे । दयारूपाय नमः । ५४०

दयानिधये नमः । दयापराय । दयामूर्तये । दयादात्रे । दयादानपरायणाय । देवेशाय । देवदाय । देवाय । देवराजाधिपालकाय । दीनबन्धवे । दीनदात्रे । दीनोद्धरणाय । दिव्यदृशे । दिव्यदेहाय ।

दिव्यरूपाय । दिव्यासननिवासकाय । दीर्घकेशाय । दीर्घपुच्छाय । दीर्घसूत्राय । दीर्घभुजे नमः । (५६०)

दीर्घदर्शिने नमः । दूरदर्शिने । दीर्घबाहवे । दीर्घपाय । दानवारये । दरिद्रारये । दैत्यारये । दस्युभञ्जनाय । दंष्ट्रिणे । दण्डिने। दण्डधराय । दण्डपाय । दण्डप्रदायकाय । दामोदरप्रियाय । दत्तात्रेयपूजनतत्पराय । दर्वीदलहुतप्रीताय । दद्रुरोगविनाशकाय । धर्माय । धर्मिणे । धर्मचारिणे नमः । ५८०

धर्मशास्त्रपरायणाय नमः । धर्मात्मने । धर्मनेत्रे । धर्मदृशे । धर्मधारकाय । धर्मध्वजाय । धर्ममूर्तये । धर्मराजस्य त्रायकाय । धात्रे। ध्येयाय । धनाय । धन्याय । धनदाय । धनपाय । धनिने । धनदत्राणकर्त्रे । धनपप्रतिपालकाय । धरणीधरप्रियाय । धन्विने । धनवद्धनधारकाय नमः । ६००

धन्वीशवत्सलाय नमः । धीराय । धातृमोदप्रमोदकाय । धात्रैश्वर्यदात्रे । धात्रीशप्रतिपूजकाय । धात्रात्मने । धरानाथाय । धरानाथप्रबोधकाय । धर्मिष्ठाय । धर्मकेतवे । धवलाय । धवलप्रियाय। धवलाचलवासिने । धेनुदाय । धेनुपाय । धनिने । ध्वनिरूपाय । ध्वनिप्राणाय । ध्वनिधर्मप्रबोधकाय । धर्माध्यक्षाय नमः । ६२०

ध्वजाय नमः । धूम्राय । धातुरोधिविरोधकाय । नारायणाय । नराय । नेत्रे । नदीशाय । नरवानराय । नदीसंक्रमणाय । नाट्याय। नाट्यनेत्रे । नटप्रियाय । नारायणात्मकाय । नन्दिने । नन्दिशृङ्गिगणाधिपाय । नन्दिकेश्वरवर्मणे । नन्दिकेश्वरपूजकाय । नरसिंहाय । नटाय । नीपाय नमः । ६४०

नखयुद्धविशारदाय नमः । नखायुधाय । नलाय । नीलाय । नलनीलप्रमोदकाय । नवद्वारपुराधाराय । नवद्वारपुरातनाय । नरनारायणस्तुत्याय । नवनाथाय । नगेश्वराय । नखदंष्ट्रायुधाय । नित्याय । निराकाराय । निरञ्जनाय । निष्कलङ्काय । निरवद्याय । निर्मलाय । निर्ममाय । नगाय । नगर ग्रामपालाय नमः । ६६०

निरन्ताय नमः । नगराधिपाय । नागकन्याभयध्वंसिने । नागारिप्रियाय । नागराय । पीताम्बराय । पद्मनाभाय । पुण्डरीकाक्षपावनाय । पद्माक्षाय । पद्मवक्त्राय । पद्मासनप्रपूजकाय। पद्ममालिने । पद्मपराय । पद्मपूजनतत्पराय । पद्मपाणये । पद्मपादाय। पुण्डरीकाक्षसेवनाय । पावनाय । पवनात्मने । पवनात्मजाय नमः । ६८०

पापघ्ने । पराय । परतराय । पद्माय । परमाय । परमात्मकाय। पीताम्बराय । प्रियाय । प्रेम्णे । प्रेमदाय । प्रेमपालकाय । प्रौढाय । प्रौढपराय । प्रेतदोषघ्ने । प्रेतनाशकाय । प्रभञ्जनान्वयाय । पञ्चभ्यः। पञ्चाक्षरमनुप्रियाय । पन्नगारये । प्रतापिने नमः । ७००

प्रपन्नाय नमः । परदोषघ्ने । पराभिचारशमनाय । परसैन्यविनाशकाय । प्रतिवादिमुखस्तम्भाय । पुराधाराय । पुरारिनुते। पराजिताय । परस्मैब्रह्मणे । परात्परपरात्पराय । पातालगाय । पुराणाय । पुरातनाय । प्लवङ्गमाय । पुराणपुरुषाय । पूज्याय । पुरुषार्थप्रपूरकाय । प्लवगेशाय । पलाशारये । पृथुकाय नमः । ७२०

पृथिवीपतये नमः । पुण्यशीलाय । पुण्यराशये । पुण्यात्मने । पुण्यपालकाय । पुण्यकीर्तये । पुण्यगीतये । प्राणदाय । प्राणपोषकाय। प्रवीणाय । प्रसन्नाय । पार्थध्वजनिवासकाय । पिङ्गकेशाय । पिङ्गरोम्णे ।

प्रणवाय। पिङ्गलप्रणाय। पराशराय। पापहर्त्रे। पिप्पलाश्रयसिद्धिदाय। पुण्यश्लोकाय नमः। ७४०

पुरातीताय नमः। प्रथमाय। पुरुषाय। पुंसे। पुराधाराय। प्रत्यक्षाय। परमेष्ठिने। पितामहाय। फुल्लारविन्दवदनाय। फुल्लोत्कमल-लोचनाय। फूत्काराय। फूत्कराय। फुवे। फूदमन्त्र-परायणाय। स्फटिकाद्रिनिवासिने। फुल्लेन्दीवरलोचनाय। वायुरूपिणे। वायुसुताय। वाय्वात्मने। वामनाशकाय नमः। ७६०

वनाय नमः। वनचराय। बालाय। बालत्रात्रे। बालकाय। विश्वनाथाय। विश्वाय। विश्वात्मने। विश्वपालकाय। विश्वधात्रे। विश्वकर्त्रे। विश्ववेत्त्रे। विशांपतये। विमलाय। विमलज्ञानाय। विमलानन्ददायकाय। विमलोत्पलवक्त्राय। विमलात्मने। विलासकृते। बिन्दुमाधवपूज्याय नमः। ७८०

बिन्दुमाधवसेवकाय नमः। बीजाय। वीर्यदाय। बीजहारिणे। बीजप्रदाय। विभवे। विजयाय। बीजकर्त्रे। विभूतये। भूतिदायकाय। विश्ववन्द्याय। विश्वगम्याय। विश्वहर्त्रे। विराट्तनवे। बुलकारहतारातये। वसुदेवाय। वनप्रदाय। ब्रह्मपुच्छाय। ब्रह्मपराय। वानराय नमः॥ ८००

वानरेश्वराय नमः। बलिबन्धनकृते। विश्वतेजसे। विश्वप्रतिष्ठिताय। विभोक्त्रे। वायुदेवाय। वीरवीराय। वसुन्धराय। वनमालिने। वनध्वंसिने। वारुणाय। वैष्णवाय। बलिने। विभीषणप्रियाय। विष्णुसेविने। वायुगवये। विदुषे। विपद्माय। वायुवंशाय। वेदवेदान्तपारगाय नमः। ८२०

बृहत्तनवे नमः। बृहत्पादाय। बृहत्कायाय। बृहद्यशसे। बृहन्नासाय। बृहद्बाहवे। बृहन्मूर्तये। बृहत्स्तुतये। बृहद्धनुषे। बृहज्जवाय।

बृहत्कायाय । बृहत्कराय । बृहद्व्रतये । बृहत्पुच्छाय । बृहल्लोकफलप्रदाय । बृहत्सेव्याय । बृहच्छक्तये । बृहद्विद्याविशारदाय। बृहल्लोकरताय । विद्यायै नमः । ८४०

विद्यादात्रे नमः । विदिक्पतये । विग्रहाय । विग्रहरताय । व्याधिनाशिने । व्याधिदाय । विशिष्टाय । बलदात्रे । विघ्ननाशाय। विनायकाय । वराहाय । वसुधानाथाय । भगवते । भयभञ्जनाय । भाग्यदाय। भयकर्त्रे । भागाय । भृगुपतिप्रियाय । भव्याय । भक्ताय नमः । ८६०

भरद्वाजाय नमः । भयाङ्घ्रये । भयनाशनाय । माधवाय । मधुरानाथाय । मेघनादाय । महामुनये । मायापतये । मनस्विने । मायातीताय । मनोत्सुकाय । मैनाकवन्दितामोदाय । मनोवेगिने । महेश्वराय। मायानिर्जितरक्षसे । मायानिर्जितविष्टपाय । मायाश्रयाय निलयाय । मायाविध्वंसकाय । मयाय । मनोयमपराय नमः । ८८०

याम्याय नमः । यमदुःखनिवारणाय । यमुनातीरवासिने । यमुनातीर्थचारणाय । रामाय । रामप्रियाय । रम्याय । राघवाय । रघुनन्दनाय । रामप्रपूजकाय । रुद्राय । रुद्रसेविने । रमापतये । रावणारये । रमानाथवत्सलाय । रघुपुङ्गवाय। रक्षोघ्नाय । रामदूताय। रामेष्टाय । राक्षसान्तकाय नमः ९००

रामभक्ताय नमः । रामरूपाय । राजराजाय । रणोत्सुकाय । लङ्काविध्वंसकाय । लङ्कापतिघातिने । लताप्रियाय । लक्ष्मीनाथप्रियाय । लक्ष्मीनारायणात्मपालकाय । प्लवगाब्धिहेलकाय। लङ्केशगृहभञ्जनाय । ब्रह्मस्वरूपिणे । ब्रह्मात्मने । ब्रह्मज्ञाय । ब्रह्मपालकाय । ब्रह्मवादिने । विक्षेत्राय । विश्वबीजाय । विश्वदृशे । विश्वम्भराय नमः । ९२०

विश्वमूर्तये नमः । विश्वाकाराय । विश्वधृषे । विश्वात्मने । विश्वसेव्याय । विश्वाय । विश्वेश्वराय । विभवे । शुक्लाय । शुक्रप्रदाय। शुक्रात्मने । शुभप्रदाय । शर्वरीपतिशूराय । शूराय । श्रुतिश्रवसे । शाकंभरीशक्तिधराय । शत्रुघ्नाय । शरणप्रदाय । शङ्कराय । शान्तिदाय नमः । ९४०

शान्ताय नमः । शिवाय । शूलिने । शिवार्चिताय । श्रीरामरूपाय । श्रीवासाय । श्रीपदाय । श्रीकराय । शुचये । श्रीशाय। श्रीदाय । श्रीकराय । श्रीकान्तप्रियाय । श्रीनिधये । षोडशस्वरसंयुक्ताय । षोडशात्मने प्रियंकराय । षडङ्गस्तोत्रनिरताय । षडाननप्रपूजकाय। षट्शास्त्रवेत्त्रे । षड्बाहवे नमः । ९६०

षट्स्वरूपाय नमः । षडूर्मिपाय । सनातनाय । सत्यरूपाय । सत्यलोकप्रबोधकाय । सत्यात्मने । सत्यदात्रे । सत्यव्रतपरायणाय। सौम्याय । सौम्यप्रदाय । सौम्यदृक्सौम्याय । सौम्यपालकाय । सुग्रीवादियुताय । सर्वसंसारभयनाशनाय । सूत्रात्मने । सूक्ष्मसन्ध्याय। स्थूलाय । सर्वगतये पुंसे । सुरभये । सागराय नमः । ९८०

सेतवे नमः । सत्याय । सत्यपराक्रमाय । सत्यगर्भाय । सत्यसेतवे। सिद्धये । सत्यगोचराय । सत्यवादिने । सुकर्मणे । सर्वानन्दैकाय। ईश्वराय । सिद्धये साध्याय । सुसिद्धाय । सिद्धिहेतुकाय सङ्कल्पाय । सप्तपातालचरणाय । सप्तर्षिगणवन्दिताय। सप्ताब्धिलङ्घनाय वीराय । सप्तद्वीपोरुमण्डलाय । सप्ताङ्गराज्यसुखदाय । सप्तमातृनिषेविताय । सप्तच्छन्दोनिधये नमः । १०००

सप्तसप्तपातालसंश्रयाय नमः । सङ्कर्षणाय । सहस्रास्याय । सहस्राक्षाय । सहस्रपदे । हनुमते । हर्षदात्रे । हराय । हरिहरीश्वराय । क्षुद्रराक्षसघातिने । क्षुद्धतक्षान्तिदायकाय ।

अनादीशाय । अनन्ताय । आनन्दाय । अध्यात्मबोधकाय । इन्द्राय । ईशोत्तमाय । उन्मत्तजनऋद्धिदाय । ऋवर्णाय । लृपदोपेताय । ऐश्वर्याय । ओषधीप्रियाय । औषधाय । अंशुमते । सर्वकारणाय अकाराय नमः । (१०२५)

* * *

# श्री हनुमत्सहस्रनामस्तोत्रम्-२

ऋषय ऊचुः—

को मन्त्रः किमु तद्ध्यानं तन्नो ब्रूहि यथार्थतः ।
कथासुधारसं पीत्वा न तृप्यामः परन्तप ॥ १

वाल्मीकिरुवाच—

मन्त्रं हनुमतो विद्धि भुक्तिमुक्तिप्रदायकम् ।
महारिष्टमहापापसर्वदुःखनिवारणम् ॥ २

ओ ऐं ह्रीं श्रीं । हनूमते रामदूताय लङ्काविध्वंसनायांजनागर्भसम्भूताय शाकिनी डाकिनी विध्वंसनाय किलिकिलि भुभुकारिणे विभीषणाय हनुमते देवाय ओं ह्रीं ह्रौं ह्रां ह्रूं फट् स्वाहा ॥

अन्यं हनुमतो मन्त्रं सहस्रं नामसंज्ञितम् ।
जानन्तु ऋषयः सर्वे महादुरितनाशनम् ॥ ३

यस्य संस्मरणात् सीतां लब्ध्वा राज्यमकण्टकम् ।
विभीषणाय च ददावात्मानं लब्धवान् यथा ॥ ४

ऋषय ऊचुः—

सहस्रनामसन्मन्त्रं दुःखाघौघनिवारणम् ।
वाल्मीके ब्रूहि नस्तूर्णं शुश्रूषामः कथां पराम् ॥ ५

वाल्मीकिरुवाच-

शृण्वन्तु ऋषयः सर्वे सहस्रनामकं स्तवम्।
स्तवानामुत्तमं दिव्यं सदर्थस्य प्रकाशकम्।। ६

अस्य श्री हनुमत्सहस्रनामस्तोत्रमहामन्त्रस्य श्री रामचन्द्र ऋषिः, हनूमान् देवता, अनुष्टुप् छन्दः। ह्रां ह्रीं ह्रूं ह्रः बीजम्। श्रीरिति शक्तिः। किलिकिलि भ्रू भ्रू कारेणेति कीलकम्। लङ्काविध्वंसनायेति कवचम्। मम सर्वोपद्रवशान्त्यर्थं सर्वकामानां सिद्ध्यर्थं जपे विनियोगः। ओं ऐं ह्रीं हनुमते रामदूताय अङ्गुष्ठाभ्यां नमः। लङ्काविध्वंसनाय तर्जनीभ्यां नमः। अञ्जनागर्भसम्भूताय मध्यमाभ्यां नमः। शाकिनी डाकिनी विध्वंसनाय अनामिकाभ्यां नमः। ओं किलि किलि भ्रू भ्रू कारेण विभीषणाय हनूमते देवाय कनिष्ठिकाभ्यां नमः। ओं श्रीं ह्रीं ह्रूं ह्रां फट् स्वाहा करतलकरपृष्ठाभ्यां नमः। ओं हनुमते रामदूताय हृदयाय नमः। लङ्काविध्वंसनाय शिरसे स्वाहा नमः। ओं ह्रौं अञ्जनागर्भसम्भूताय शिखायै वौषट्। ओं ह्रां शाकिनीडाकिनी ध्वंसनाय कवचाय हुम्। ओं किलि किलि भ्रू भ्रू कारेण विभीषणाय हनुमते देवाय नेत्रत्रयाय वौषट्। ओं श्रीं ह्रीं ह्रौं ह्रां फट् स्वाहा। अस्त्राय फट्।

ध्यानम्—

प्रतप्तस्वर्णवर्णाभं संरक्तारुणलोचनम्।
सुग्रीवादियुतं ध्यायेत् पीताम्बरसमावृतम्।।

गोष्पदीकृतवाराशिं पुच्छमस्तकमीश्वरम्।
ज्ञानमुद्रां च बिभ्राणं सर्वालङ्कारभूषितम्।।

वामहस्तसमाकृष्टदशास्याननमण्डलम्।
उद्यद्दक्षिणदोर्दण्डं हनूमन्तं विचिन्तयेत्॥

हनूमान् श्रीप्रदो वायुपुत्रो रुद्रो नयोऽजरः।
अमृत्युर्वीरवीरश्च ग्रामवासो जनाश्रयः॥ १

धनदो निर्गुणाकारो वीरो निधिपतिर्मुनिः।
पिङ्गाक्षो वरदो वाग्मी सीताशोकविनाशनः॥ २

शिवः शर्वः परोऽव्यक्तो व्यक्ताव्यक्तो धराधरः।
पिङ्गकेशः पिङ्गरोमा श्रुतिगम्यः सनातनः॥ ३

अनादिर्भगवान् दिव्यो विश्वहेतुर्नराश्रयः।
आरोग्यकर्ता विश्वेशो विश्वनाथो हरीश्वरः॥ ४

भर्गो रामो रामभक्तः कल्याणप्रकृतीश्वरः।
विश्वम्भरो विश्वमूर्तिर्विश्वाकारोऽथ विश्वपः॥ ५

विश्वात्मा विश्वसेव्योऽथ विश्वो विश्वधरो रविः।
विश्वचेष्टो विश्वगम्यो विश्वध्येयःकलाधरः॥ ६

प्लवङ्गमः कपिश्रेष्ठो ज्येष्ठो वेद्यो वनेचरः।
बालो वृद्धो युवा तत्त्वं तत्वगम्यः सखा ह्यजः॥ ७

अञ्जनासूनुरव्यग्रो ग्रामस्यान्तो धराधरः।
भूर्भुवःस्वर्महर्लोको जनोलोकस्तपोऽव्ययः॥ ८

सत्यमोङ्कारगम्यश्च प्रणवो व्यापकोऽमलः।
शिवधर्मप्रतिष्ठाता रामेष्टः फल्गुनप्रियः॥ ९

गोष्पदीकृतवारीशः पूर्णकामो धरापतिः ।
रक्षोघ्नः पुण्डरीकाक्षः शरणागतवत्सलः ॥ १०

जानकीप्राणदाता च रक्षःप्राणापहारकः ।
पूर्णः सत्यः पीतवासा दिवाकरसमप्रभः ॥ ११

द्रोणहर्ता शक्तिनेता शक्तिराक्षसमारकः ।
अक्षघ्नो रामदूतश्च शाकिनीजीविताहरः ॥ १२

बुभूकारहतारातिर्गर्वपर्वतमर्दनः ।
हेतुस्त्वहेतुः प्रांशुश्च विश्वकर्ता जगद्गुरुः ॥ १३

जगन्नाथो जगन्नेता जगदीशो जनेश्वरः ।
जगत्श्रितो हरिः श्रीशो गरुडस्मयभञ्जकः ॥ १४

पार्थध्वजो वायुपुत्रः सितपुच्छोऽमितप्रभः ।
ब्रह्मपुच्छः परब्रह्मपुच्छो रामेष्टकारकः ॥ १५

सुग्रीवादियुतो ज्ञानी वानरो वानरेश्वरः ।
कल्पस्थायी चिरञ्जीवी प्रसन्नश्च सदाशिवः ॥ १६

सन्मतिः सद्गतिर्भुक्तिमुक्तिदः कीर्तिदायकः ।
कीर्तिः कीर्तिप्रदश्चैव समुद्रः श्रीप्रदः शिवः ॥ १७

उदधिक्रमणो देवः संसारभयनाशनः ।
वालिबन्धनकृद्विश्वजेता विश्वप्रतिष्ठितः ॥ १८

लङ्कारिः कालपुरुषो लङ्केशगृहभञ्जनः ।
भूतावासो वासुदेवो वसुस्त्रिभुवनेश्वरः ॥ १९

श्रीरामरूपः कृष्णस्तु लङ्काप्रासादभञ्जनः ।
कृष्णः कृष्णस्तुतः शान्तः शान्तिदो विश्वभावनः ॥ २०

विश्वभोक्ताऽथ मारघ्नो ब्रह्मचारी जितेन्द्रियः ।
ऊर्ध्वगो लाङ्गुली माली लाङ्गूलाहतराक्षसः ॥ २१

समीरतनुजो वीरो वीरमारो जयप्रदः ।
जगन्मङ्गलदः पुण्यः पुण्यश्रवणकीर्तनः ॥ २२

पुण्यकीर्तिः पुण्यगीतिर्जगत्पावनपावनः ।
देवेशोऽमितरोमाऽथ रामभक्तविधायकः ॥ २३

ध्याता ध्येयो जगत्साक्षी चेता चैतन्यविग्रहः ।
ज्ञानदः प्राणदः प्राणो जगत्प्राणः समीरणः ॥ २४

विभीषणप्रियः शूरः पिप्पलाश्रयसिद्धिदः ।
सिद्धः सिद्धाश्रयः कालः कालभक्षकपूजितः ॥ २५

लङ्केशनिधनस्थायी लङ्कादाहक ईश्वरः ।
चन्द्रसूर्याग्निनेत्रश्च कालाग्निः प्रलयान्तकः ॥ २६

कपिलः कपिशः पुण्यरातिर्द्वादशराशिगः ।
सर्वाश्रयोऽप्रमेयात्मा रेवत्यादिनिवारकः ॥ २७

लक्ष्मणप्राणदाता च सीताजीवनहेतुकः ।
रामध्यायी हृषीकेशो विष्णुभक्तो जटी बली ॥ २८

देवारिदर्पहा होता धाता कर्ता जगत्प्रभुः ।
नगरग्रामपालश्च शुद्धो बुद्धो निरन्तरः ॥ २९

निरञ्जनो निर्विकल्पो गुणातीतो भयङ्करः ।
हनुमांश्च दुराराध्यस्तपःसाध्यो महेश्वरः ॥ ३०

जानकीघनशोकोत्थतापहर्ता पराशरः ।
वाङ्मयः सदसद्रूपः कारणं प्रकृतेः परः ॥ ३१

भाग्यदो निर्मलो नेता पुच्छलङ्काविदाहकः ।
पुच्छबद्धो यातुधानो यातुधानरिपुप्रियः ॥ ३२

छायापहारी भूतेशो लोकेशः सद्गतिप्रदः ।
प्लवङ्गमेश्वरः क्रोधः क्रोधसंरक्तलोचनः ॥ ३३

क्रोधहर्ता तापहर्ता भक्ताभयवरप्रदः ।
भक्तानुकम्पी विश्वेशः पुरुहूतः पुरन्दरः ॥ ३४

अग्निर्विभावसुर्भास्वान् यमो निर्ऋतिरेव च ।
वरुणो वायुगतिमान् वायुः कुबेर ईश्वरः ॥ ३५

रविश्चन्द्रः कुजः सौम्यो गुरुः काव्यः शनैश्चरः ।
राहुः केतुर्मरुद्दाता धाता हर्ता समीरजः ॥ ३६

मशकीकृतदेवारिर्दैत्यारिर्मधूसूदनः ।
कामः कपिः कामपालः कपिलो विश्वजीवनः ॥ ३७

भागीरथीपदाम्भोजः सेतुबन्धविशारदः ।
स्वाहा स्वधा हविः कव्यं हव्यवाहः प्रकाशकः ॥ ३८

स्वप्रकाशो महावीरो मधुरोऽमितविक्रमः ।
उड्डीनोड्डीनगतिमान् सद्गतिः पुरुषोत्तमः ॥ ३९

जगदात्मा जगद्योनिर्जगदन्तो ह्यनन्तरः ।
विपाप्मा निष्कलङ्कोऽथ महान् महदहङ्कृतिः ॥ ४०

खं वायुः पृथिवी चापो वह्निर्दिक् काल एकलः ।
क्षेत्रज्ञः क्षेत्रपालश्च पल्वलीकृतसागरः ॥ ४१

हिरण्मयः पुराणश्च खेचरो भूचरो मनुः ।
हिरण्यगर्भः सूत्रात्मा राजराजो विशां पतिः ॥ ४२

वेदान्तवेद्य उद्गीथो वेदाङ्गो वेदपारगः ।
प्रतिग्रामस्थितः सद्यः स्फूर्तिदाता गुणाकरः ॥ ४३

नक्षत्रमाली भूतात्मा सुरभिः कल्पपादपः ।
चिन्तामणिर्गुणनिधिः प्रजाद्वारमनुत्तमः ॥ ४४

पुण्यश्लोकः पुरारातिः मतिमान् शर्वरीपतिः ।
किल्किलारावसन्त्रस्तभूतप्रेतपिशाचकः ॥ ४५

ऋणत्रयहरः सूक्ष्मः स्थूलः सर्वगतिः पुमान् ।
अपस्मारहरः स्मर्ता श्रुतिर्गाथा स्मृतिर्मनुः ॥ ४६

स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं यतीश्वरः ।
नादरूपं परं ब्रह्म ब्रह्म ब्रह्मपुरातनः ॥ ४७

एकोऽनेको जनः शुक्लः स्वयंज्योतिरनाकुलः ।
ज्योतिर्ज्योतिरनादिश्च सात्विको राजसस्तमः ॥ ४८

तमोहर्ता निरालम्बो निराकारो गुणाकरः ।
गुणाश्रयो गुणमयो बृहत्कायो बृहद्यशाः ॥ ४९

बृहद्धनुर्बृहत्पादो बृहन्मूर्धा बृहत्स्वनः ।
बृहत्कर्णो बृहन्नासो बृहद्बाहुर्बृहत्तनुः ॥ ५०

बृहद्गलो बृहत्कायो बृहत्पुच्छो बृहत्करः ।
बृहद्गतिर्बृहत्सेवो बृहल्लोकफलप्रदः ॥ ५१

बृहद्भक्तिर्बृहद्वाञ्छाफलदो बृहदीश्वरः ।
बृहल्लोकनुतो द्रष्टा विद्यादाता जगद्गुरुः ॥ ५२

देवाचार्यः सत्यवादी ब्रह्मवादी कलाधरः ।
सप्तपातालगामी च मलयाचलसंश्रयः ॥ ५३

उत्तराशास्थितः श्रीशो दिव्यौषधिवशः खगः ।
शाखामृगः कपीन्द्रोऽथ पुराणः प्राणचक्षुरः ॥ ५४

चतुरो ब्राह्मणो योगी योगिगम्यः परोऽवरः ।
अनादिनिधनो व्यासो वैकुण्ठः पृथिवीपतिः ॥ ५५

अपराजितो जितारातिः सदानन्दद ईशिता ।
गोपालो गोपतिर्योद्धा कलिः स्फालः परात्परः ॥ ५६

मनोवेगी सदायोगी संसारभयनाशनः ।
तत्त्वदाताऽथ तत्वज्ञस्तत्त्वं तत्त्वप्रकाशकः ॥ ५७

शुद्धो बुद्धो नित्ययुक्तो भक्ताकारो जगद्रथः ।
प्रलयोऽमितमायश्च मायातीतो विमत्सरः ॥ ५८

मायानिर्जितरक्षाश्च मायानिर्मितविष्टपः ।
मायाश्रयश्च निर्लेपो मायानिर्वर्तकः सुखी ॥ ५९

सुखी(खं) सुखप्रदो नागो महेशकृतसंस्तवः ।
महेश्वरः सत्यसन्धः शरभः कलिपावनः ॥ ६०

रसो रसज्ञः सन्मानो रूपं चक्षुः श्रुती रवः ।
घ्राणं गन्धः स्पर्शनं च स्पर्शो हिङ्कारमानगः ॥ ६१

नेति नेतीति गम्यश्च वैकुण्ठभजनप्रियः ।
गिरिशो गिरिजाकान्तो दुर्वासाः कविरङ्गिराः ॥ ६२

भृगुर्वसिष्ठश्च्यवनो नारदस्तुम्बुरुर्हरः ।
विश्वक्षेत्रं विश्वबीजं विश्वनेत्रं च विश्वपः ॥ ६३

याजको यजमानश्च पावकः पितरस्तथा ।
श्रद्धा बुद्धिः क्षमा तन्द्रा मन्त्रो मन्त्रयिता सुरः ॥ ६४

राजेन्द्रो भूपती रूढो माली संसारसारथिः ।
नित्यः सम्पूर्णकामश्च भक्तकामधुगुत्तमः ॥ ६५

गणपः केशवो भ्राता पिता माताऽथ मारुतिः ।
सहस्रमूर्धा सहस्रास्यः सहस्राक्षः सहस्रपात् ॥ ६६

कामजित् कामदहनः कामः काम्यफलप्रदः ।
मुद्रोपहारी रक्षोघ्नः क्षितिभारहरो बलः ॥ ६७

नखदंष्ट्रायुधो विष्णुभक्तो भक्ताभयप्रदः ।
दर्पहा दर्पदो दंष्ट्राशतमूर्तिरमूर्तिमान् ॥ ६८

महानिधिर्महाभागो महाभर्गो महर्द्धिदः ।
महाकारो महायोगी महातेजा महाद्युतिः ॥ ६९

महाकर्मा महानादो महामन्त्रो महामतिः ।
महाशमो महोदारो महादेवात्मको विभुः ॥ ७०

रुद्रकर्मा क्रूरकर्मा रत्ननाभः कृतागमः ।
अम्भोधिलङ्घनः सिद्धः सत्यधर्मा प्रमोदनः ॥ ७१

जितामित्रो जयः सोमो विजयो वायुवाहनः ।
जीवो धाता सहस्रांशुर्मुकुन्दो भूरिदक्षिणः ॥ ७२

सिद्धार्थः सिद्धिदः सिद्धः सङ्कल्पः सिद्धिहेतुकः ।
सप्तपातालचरणः सप्तर्षिगणवन्दितः ॥ ७३

सप्ताब्धिलङ्घनो वीरः सप्तद्वीपोरुमण्डलः ।
सप्ताङ्गराज्यसुखदः सप्तमातृनिषेवितः ॥ ७४

सप्तलोकैकमकुटः सप्तहोत्रः स्वराश्रयः ।
सप्तसामोपगीतश्च सप्तपातालसंश्रयः ॥ ७५

सप्तच्छन्दोनिधिः सप्तच्छन्दः सप्तजनाश्रयः ।
मेधादः कीर्तिदः शोकहारी दौर्भाग्यनाशनः ॥ ७६

सर्ववश्यकरो गर्भदोषहा पुत्रपौत्रदः ।
प्रतिवादिमुखस्तम्भो रुष्टचित्तप्रसादनः ॥ ७७

पराभिचारशमनो दुःखहा बन्धमोक्षदः ।
नवद्वारपुराधारो नवद्वारनिकेतनः ॥ ७८

नरनारायणस्तुत्यो नवनाथमहेश्वरः ।
मेखली कवची खड्गी भ्राजिष्णुर्जिष्णुसारथिः ॥ ७९

बहुयोजनविस्तीर्णपुच्छः पुच्छहतासुरः ।
दुष्टहन्ता नियमिता पिशाचग्रहशातनः ॥ ८०

बालग्रहविनाशी च धर्मनेता कृपाकरः ।
उग्रकृत्यश्चोग्रवेग उग्रनेत्रः शतक्रतुः ॥ ८१

शतमन्युस्तुतः स्तुत्यः स्तुतिः स्तोता महाबलः ।
समग्रगुणशाली च व्यग्रो रक्षोविनाशनः ॥ ८२

रक्षोग्निदावो ब्रह्मेशः श्रीधरो भक्तवत्सलः ।
मेघनादो मेघरूपो मेघवृष्टिनिवारणः ॥ ८३

मेघजीवनहेतुश्च मेघश्यामः परात्मकः ।
समीरतनयो धाता तत्त्वविद्याविशारदः ॥ ८४

अमोघोऽमोघवृष्टिश्चाभीष्टदोऽनिष्टनाशनः ।
अर्थोऽनर्थापहारी च समर्थो रामसेवकः ॥ ८५

अर्थी धन्योऽसुराराातिः पुण्डरीकाक्ष आत्मभूः ।
सङ्कर्षणो विशुद्धात्मा विद्याराशिः सुरेश्वरः ॥ ८६

अचलोद्धारको नित्यः सेतुकृद्रामसारथिः ।
आनन्दः परमानन्दो मत्स्यः कूर्मो निधिः शयः ॥ ८७

वराहो नारसिंहश्च वामनो जमदग्निजः ।
रामः कृष्णः शिवो बुद्धः कल्की रामाश्रयो हरिः ॥ ८८

नन्दी भृङ्गी च चण्डी च गणेशो गणसेवितः ।
कर्माध्यक्षः सुरारामो विश्रामो जगतीपतिः ॥ ८९

जगन्नाथः कपीशश्च सर्वावासः सदाश्रयः ।
सुग्रीवादिस्तुतो दान्तः सर्वकर्मा प्लवङ्गमः ॥ ९०

नखदारितरक्षश्च नखयुद्धविशारदः ।
कुशलः सुधनः शेषो वासुकिस्तक्षकस्तथा ॥ ९१

स्वर्णवर्णो बलाढ्यश्च पुरुजेताऽघनाशनः ।
कैवल्यदीपः कैवल्यो गरुडः पन्नगो गुरुः ॥ ९२

क्लीक्लीरावहृतारातिगर्वः पर्वतभेदनः ।
वज्राङ्गो वज्रवक्त्रश्च भक्तवज्रनिवारकः ॥ ९३

नखायुधो मणिग्रीवो ज्वालामाली च भास्करः ।
प्रौढप्रतापस्तपनो भक्ततापनिवारकः ॥ ९४

शरणं जीवनं भोक्ता नानाचेष्टोऽथ चञ्चलः ।
स्वस्थस्त्वस्वास्थ्यहा दुःखशातनः पवनात्मजः ॥ ९५

पवनः पावनः कान्तो भक्ताङ्गः सहनो बलः ।
मेघनादरिपुर्मेघनादसंहृतराक्षसः ॥ ९६

क्षरोऽक्षरो विनीतात्मा वानरेशः सताङ्गतिः ।
श्रीकण्ठः शितिकण्ठश्च सहायः सहनायकः ॥ ९७

अस्थूलस्त्वनणुर्भर्गो देवसंसृतिनाशनः ।
अध्यात्मविद्यासारश्चाप्यध्यात्मकुशलः सुधीः ॥ ९८

अकल्मषः सत्यहेतुः सत्यदः सत्यगोचरः ।
सत्यगर्भः सत्यरूपः सत्यः सत्यपराक्रमः ॥ ९९

अञ्जनाप्राणलिङ्गं च वायुवंशोद्भवः श्रुतिः ।
भद्ररूपो रुद्ररूपः सुरूपश्चित्ररूपधृक् ॥ १००

मैनाकवन्दितः सूक्ष्मदर्शनो विजयो जयः ।
क्रान्तदिङ्मण्डलो रुद्रः प्रकटीकृतविक्रमः ॥ १०१

कम्बुकण्ठः प्रसन्नात्मा ह्रस्वनासो वृकोदरः ।
लम्बोष्ठः कुण्डली चित्रमाली योगविदां वरः ॥ १०२

विपश्चित् कविरानन्दविग्रहोऽनल्पनाशनः ।
फाल्गुनीसूनुरव्यग्रो योगात्मा योगतत्परः ॥ १०३

योगविद्योगकर्ता च योगयोनिर्दिगम्बरः ।
अकारादिक्षकारान्तवर्णनिर्मितविग्रहः ॥ १०४

उलूखलमुखः सिद्धसंस्तुतः परमेश्वरः ।
श्लिष्टजङ्घः श्लिष्टजानुः श्लिष्टपाणिः शिखाधरः ॥ १०५

सुशर्माऽमितधर्मा च नारायणपरायणः ।
जिष्णुर्भविष्णू रोचिष्णुर्ग्रसिष्णुः स्थाणुरेव च ॥ १०६

हरी रुद्रानुकृद्वृक्षकम्पनो भूमिकम्पनः ।
गुणप्रवाहः सूत्रात्मा वीतरागः स्तुतिप्रियः ॥ १०७

नागकन्याभयध्वंसी कृतपूर्णः कपालभृत् ।
अनुकूलोऽक्षयोऽपायोऽनपायो वेदपारगः ॥ १०८

अक्षरः पुरुषो लोकनाथस्त्र्यक्षः प्रभुर्दृढः ।
अष्टाङ्गयोगफलभूः सत्यसन्धः पुरुष्टुतः ॥ १०९

श्मशानस्थाननिलयः प्रेतविद्रावणक्षमः ।
पञ्चाक्षरपरः पञ्चमातृको रञ्जनो ध्वजः ॥ ११०

योगिनीवृन्दवन्द्यश्रीः शत्रुघ्नोऽनन्तविक्रमः ।
ब्रह्मचारीन्द्रियवपुर्धृतदण्डो दशात्मकः ॥ १११

अप्रपञ्चः सदाचारः शूरसेनो विदारकः ।
बुद्धः प्रमोद आनन्दः सप्तजिह्वपतिर्धरः . ११२

नवद्वारपुराधारः प्रत्यग्रः सामगायनः ।
षट्चक्रधामा स्वर्लोकभयहृन्मानदो मदः ॥ ११३

सर्ववश्यकरः शक्तिरनन्तोऽनन्तमङ्गलः ।
अष्टमूर्तिधरो नेता विरूपः स्वरसुन्दरः ॥ ११४

धूमकेतुर्महाकेतुः सत्यकेतुर्महारथः ।
नन्दी प्रियः स्वतन्त्रश्च मेखली डमरुप्रियः ॥ ११५

लोहिताङ्गः समिद्वह्निः षड्ऋतुः शर्व ईश्वरः ।
फलभुक् फलहस्तश्च सर्वकर्मफलप्रदः ॥ ११६

धर्माध्यक्षो धर्मफलो धर्मो धर्मप्रदोऽर्थदः ।
पञ्चविंशतितत्त्वज्ञस्तारको ब्रह्मतत्परः ॥ ११७

त्रिमार्गवसतिर्भीमः सर्वदुष्टनिबर्हणः ।
ऊर्जःस्वामी जलस्वामी शूली माली निशाकरः ॥ ११८

रक्ताम्बरधरो रक्तो रक्तमाल्यविभूषणः ।
वनमाली शुभाङ्गश्च श्वेतः श्वेताम्बरो युवा ॥ ११९

जयोऽजेयपरीवारः सहस्रवदनः कविः ।
शाकिनीडाकिनीयक्षरक्षोभूतप्रभञ्जनः ॥ १२०

सद्योजातः कामगतिर्ज्ञानमूर्तिर्यशस्करः ।
शम्भुतेजाः सार्वभौमो विष्णुभक्तः प्लवङ्गमः ॥ १२१

चतुर्णवतिमन्त्रज्ञः पौलस्त्यबलदर्पहा ।
सर्वलक्ष्मीप्रदः श्रीमानङ्गदप्रियवर्धनः ॥ १२२

स्मृतिबीजं सुरेशानः संसारभयनाशनः ।
उत्तमः श्रीपरीवारः श्रीभूरुग्रश्च कामधुक् ॥ १२३

सदागतिर्मातरिश्वा रामपादाब्जषट्पदः ।
नीलप्रियो नीलवर्णो नीलवर्णप्रियः सुहृत् ॥ १२४

रामदूतो लोकबन्धुरन्तरात्मा मनोरमः ।
श्रीरामध्यानकृद्वीरः सदा किंपुरुषस्तुतः ॥ १२५

रामकार्यान्तरङ्गश्च शुद्धिर्गतिरनामयः ।
पुण्यश्लोकः परानन्दः परेशप्रियसारथिः ॥ १२६

लोकस्वामी मुक्तिदाता सर्वकारणकारणः ।
महाबलो महावीरः पारावारगतिर्गुरुः ॥ १२७

तारको भगवांस्त्राता स्वस्तिदाता सुमङ्गलः ।
समस्तलोकसाक्षी च समस्तसुरवन्दितः ।
सीतासमेत श्रीरामपादसेवाधुरन्धरः ॥ १२८

इदं नामसहस्रं तु योऽधीते प्रत्यहं नरः ।
दुःखौघो नश्यते क्षिप्रं सम्पत्तिर्वर्धते चिरम् ।
वश्यं चतुर्विधं तस्य भवत्येव न संशयः ॥ १२९

राजानो राजपुत्राश्च राजकीयाश्च मन्त्रिणः ।
त्रिकालं पठनादस्य दृश्यन्ते च त्रिपक्षतः ॥ १३०

अश्वत्थमूले जपतां नास्ति वैरिकृतं भयम् ।
त्रिकालपठनादस्य सिद्धिः स्यात् करसंस्थिता ॥ १३१

ब्राह्मे मुहूर्ते चोत्थाय प्रत्यहं यः पठेन्नरः ।
ऐहिकामुष्मिकान् सोऽपि लभते नात्र संशयः ।। १३२

संग्रामे सन्निविष्टानां वैरिविद्रावणं भवेत् ।
ज्वरापस्मारशमनं गुल्मादिव्याधिवारणम् ।। १३३

साम्राज्यसुखसम्पत्तिदायकं जपतां नृणाम्।
य इदं पठते नित्यं पाठयेद्वा समाहितः ।
सर्वान् कामानवाप्नोति वायुपुत्रप्रसादतः ।। १३४

।। श्री हनुमत्सहस्रनामस्तोत्रम् ।।

—*—

# श्री हनुमत्सहस्रनामावलिः–२

ओं हनुमते नमः । श्रीप्रदाय । वायुपुत्राय । रुद्राय । नयाय । अजराय । अमृत्यवे । वीरवीराय । ग्रामवासाय । जनाश्रयाय । धनदाय। निर्गुणाकाराय । वीराय । निधिपतये । मुनये । पिङ्गाक्षाय। वरदाय । वाग्मिने । सीताशोकविनाशनाय । शिवाय नमः । २०

ओं शर्वाय नमः । पराय । अव्यक्ताय । व्यक्ताव्यक्ताय । धराधराय । पिङ्गकेशाय । पिङ्गरोम्णे । श्रुतिगम्याय । सनातनाय । अनादये । भगवते । दिव्याय । विश्वहेतवे । नराश्रयाय । आरोग्यकर्त्रे। विश्वेशाय । विश्वनाथाय । हरीश्वराय । भर्गाय । रामाय नमः । ४०

ओं रामभक्ताय नमः । कल्याण प्रकृतीश्वराय । विश्वम्भराय । विश्वमूर्तये । विश्वाकाराय । विश्वपाय । विश्वात्मने । विश्वसेव्याय । विश्वाय । विश्वधराय । रवये । विश्वचेष्टाय । विश्वगम्याय । विश्वध्येयाय ।

कलाधराय । प्लवङ्गमाय । कपिश्रेष्ठाय । ज्येष्ठाय । वेद्याय । वनेचराय नमः ॥ ६०

ओं बालाय नमः । वृद्धाय । यूने । तत्त्वाय । तत्वगम्याय । सखिने । अजाय । अञ्जनासूनवे । अव्यग्राय । ग्रामस्यान्ताय । धराधराय । भूः । भुवः । सुवः । महर्लोकाय । जनोलोकाय । तपसे। अव्ययाय । सत्याय । ओंकारगम्याय नमः । ८०

ओं प्रणवाय नमः । व्यापकाय । अमलाय । शिवधर्मप्रतिष्ठात्रे। रामेष्टाय । फल्गुनप्रियाय । गोष्पदीकृतवारीशाय । पूर्णकामाय । धरापतये । रक्षोघ्नाय । पुण्डरीकाक्षाय । शरणागतवत्सलाय । जानकीप्राणदात्रे । रक्षःप्राणापहारकाय । पूर्णाय । सत्याय । पीतवाससे । दिवाकरसमप्रभाय । द्रोणहर्त्रे । शक्तिनेत्रे नमः । १००

शक्तिराक्षसमारकाय नमः । अक्षघ्नाय । रामदूताय । शाकिनी-जीविताहराय । बुभूकार हतारातये । गर्वपर्वतमर्दनाय । हेतवे । अहेतवे । प्रांशवे । विश्वकर्त्रे । जगद्गुरवे । जगन्नाथाय । जगन्नेत्रे । जगदीशाय । जनेश्वराय । जगत्श्रिताय । हरये । श्रीशाय । गरुडस्मय भञ्जकाय । पार्थध्वजाय नमः । १२०

वायुपुत्राय नमः । सित पुच्छाय । अमितप्रभाय । ब्रह्मपुच्छाय। परब्रह्मपुच्छाय । रामेष्टकारकाय। सुग्रीवादियुताय । ज्ञानिने। वानराय । वानरेश्वराय ।कल्पस्थायिने । चिरञ्जीविने । प्रसन्नाय । सदाशिवाय। सन्मतये । सद्गतये । भुक्तिमुक्तिदाय । कीर्तिदायकाय । कीर्तये । कीर्तिप्रदाय नमः । १४०

समुद्राय नमः । श्रीप्रदाय । शिवाय । उदधिक्रमणाय । देवाय। संसारभयनाशकाय । वालिबन्धनकृते । विश्वजेत्रे । विश्वप्रतिष्ठिताय।

लङ्कारये। कालपुरुषाय। लङ्केशगृहभञ्जनाय। भूतावासाय। वासुदेवाय। वसवे। त्रिभुवनेश्वराय। श्रीरामरूपाय। कृष्णाय। लङ्काप्रासादभञ्जनाय। कृष्णाय नमः। १६०

कृष्णस्तुताय नमः। शान्ताय। शान्तिदाय। विश्वभावनाय। विश्वभोक्त्रे। मारघ्नाय। ब्रह्मचारिणे। जितेन्द्रियाय। ऊर्ध्वगाय। लाङ्गुलिने। मालिने। लाङ्गूलाहतराक्षसाय। समीरतनुजाय। वीराय। वीरमाराय। जयप्रदाय। जगन्मङ्गलदाय। पुण्याय। पुण्यश्रवण-कीर्तनाय। पुण्यकीर्तये नमः। १८०

पुण्यगीतये नमः। जगत्पावनपावनाय। देवेशाय। अमितरोम्णे। रामभक्तविधायकाय। ध्यात्रे। ध्येयाय। जगत्साक्षिणे। चेतसे। चैतन्यविग्रहाय। ज्ञानदाय। प्राणदाय। प्राणाय। जगत्प्राणाय। समीरणाय। विभीषणप्रियाय। शूराय। पिप्पलाश्रयसिद्धिदाय। सिद्धाय। सिद्धाश्रयाय नमः॥ २००

कालाय नमः। कालभक्षकदूषिताय। लङ्केशनिधनस्थायिने। लङ्कादाहकाय। ईश्वराय। चन्द्रसूर्याग्निनेत्राय। कालाग्नये। प्रलयान्तकाय। कपिलाय। कपिशाय। पुण्यरातये। द्वादशराशिगाय। सर्वाश्रयाय। अप्रमेयात्मने। रेवत्यादिनिवारकाय। लक्ष्मणप्राणदात्रे। सीताजीवनहेतुकाय। रामध्यायिने। हृषीकेशाय। विष्णुभक्ताय नमः। २२०

जटिने नमः। बलिने। देवारिदर्पघ्ने। होत्रे। धात्रे। कर्त्रे। जगत्प्रभवे। नगरग्रामपालाय। शुद्धाय। बुद्धाय। निरन्तराय। निरञ्जनाय। निर्वि-कल्पाय। गुणातीताय। भयङ्कराय। हनुमते। दुराराध्याय। तपःसाध्याय। महेश्वराय। जानकीघनशोकोत्थतापहर्त्रे नमः॥ २४०

पराशराय नमः । वाङ्मयाय । सदसद्रूपाय । कारणाय । प्रकृतेः पराय । भाग्यदाय । निर्मलाय । नेत्रे । पुच्छलङ्काविदाहकाय । पुच्छबद्धाय । यातुधानाय । यातुधानरिपुप्रियाय । छायापहारिणे । भूतेशाय । लोकेशाय । सद्गतिप्रदाय । प्लवङ्गमेश्वराय । क्रोधाय । क्रोधसंरक्त-लोचनाय । क्रोधहर्त्रे नमः । २६०

तापहर्त्रे नमः । भक्ताभयवरप्रदाय । भक्तानुकम्पिने । विश्वेशाय । पुरुहूताय । पुरन्दराय । अग्नये । विभावसवे । भास्वते । यमाय । निरृतये । वरुणाय । वायुगतिमते । वायवे । कुबेराय । ईश्वराय । रवये । चन्द्राय । कुजाय । सौम्याय नमः । २८०

गुरवे नमः । काव्याय । शनैश्चराय । राहवे । केतवे । मरुते । दात्रे । धात्रे । हर्त्रे । समीरजाय । मशकीकृतदेवारये । दैत्यारये । मधुसूदनाय । कामाय । कपये । कामपालाय । कपिलाय । विश्वजीवनाय । भागीरथी पदाम्भोजाय । सेतुबन्धविशारदाय नमः । ३००

स्वाहायै नमः । स्वधायै । हविषे । कव्याय । हव्यवाहाय । प्रकाशकाय । स्वप्रकाशाय । महावीराय । मधुराय । अमितविग्रहाय। उड्डीनोड्डीनगतिमते । सद्गतये । पुरुषोत्तमाय । जगदात्मने । जगद्योनये । जगदन्ताय । अनन्तराय । विपाप्मने । निष्कलङ्काय । महते नमः । ३२०

महदहङ्कृतये नमः। खाय । वायवे । पृथिव्यै । अद्भ्यः । वह्नये । दिशे ।कालाय । एकलाय। क्षेत्रज्ञाय । क्षेत्रपालाय । पल्वलीकृतसागराय । हिरण्मयाय । पुराणाय । खेचराय । भूचराय। मनवे । हिरण्यगर्भाय । सूत्रात्मने । राजराजाय नमः । ३४०

विशाम्पतये नमः । वेदान्तवेद्याय । उद्गीथाय । वेदाङ्गाय । वेदपारगाय । प्रतिग्रामस्थिताय । सद्यःस्फूर्तिदात्रे । गुणाकराय । नक्षत्रमालिने । भूतात्मने । सुरभये । कल्पपादपाय । चिन्तामणये । गुणनिधये । प्रजाद्वाराय । अनुत्तमाय । पुण्यश्लोकाय । पुरारातये । मतिमते । शर्वरीपतये नमः । ३६०

किल्किलारावसन्त्रस्तभूतप्रेतपिशाचकाय । ऋणत्रयहराय । सूक्ष्माय । स्थूलाय । सर्वगतये । पुंसे । अपस्मारहराय । स्मर्त्रे । श्रुतये । गाथायै । स्मृतये । मनवे । स्वर्गद्वाराय । प्रजाद्वाराय । मोक्षद्वाराय । यतीश्वराय । नादरूपाय । परस्मै ब्रह्मणे । ब्रह्मणे । ब्रह्मपुरातनाय नमः । ३८०

एकाय नमः । अनेकाय । जनाय । शुक्लाय । स्वयंज्योतिषे । अनाकुलाय । ज्योतिर्ज्योतिषे । अनादये । सात्विकाय । राजसाय । तमसे । तमोहर्त्रे । निरालम्बाय । निराकाराय । गुणाकराय । गुणाश्रयाय । गुणमयाय । बृहत्कायाय । बृहद्यशसे । बृहद्धनुषे नमः । ४००

बृहत्पादाय नमः । बृहन्मूर्ध्ने । बृहत्स्वनाय । बृहत्कर्णाय । बृहन्नासाय । बृहद्बाहवे । बृहत्तनवे । बृहद्गलाय । बृहत्कायाय । बृहत्पुच्छाय । बृहत्कराय । बृहद्गतये । बृहत्सेवाय । बृहल्लोकफलप्रदाय । बृहद्भक्तये । बृहद्वाञ्छाफलदाय । बृहदीश्वराय । बृहल्लोकनुताय । द्रष्ट्रे । विद्यादात्रे नमः । ४२०

जगद्गुरवे नमः । देवाचार्याय । सत्यवादिने । ब्रह्मवादिने । कलाधराय । सप्तपातालगामिने । मलयाचलसंश्रयाय । उत्तराशास्थिताय । श्रीशाय । दिव्यौषधिवशाय । खगाय ।

शाखामृगाय । कपीन्द्राय । पुराणाय । प्राणचक्षुराय । चतुराय । ब्राह्मणाय । योगिने । योगिगम्याय । पराय नमः । ४४०

अवराय नमः । अनादिनिधनाय । व्यासाय । वैकुण्ठाय । पृथिवीपतये । अपराजिताय । जितारातये । सदानन्ददाय । ईशित्रे। गोपालाय । गोपतये । योद्घ्रे । कलये । स्फालाय । परात्पराय । मनोवेगिने । सदायोगिने । संसारभयनाशनाय नमः । तत्त्वदात्रे । तत्त्वज्ञाय नमः । ४६०

तत्त्वाय नमः । तत्त्वप्रकाशकाय । शुद्धाय । बुद्धाय । नित्ययुक्ताय । भक्ताकाराय । जगद्रथाय । प्रलयाय । अमितमायाय। मायातीताय । विमत्सराय । मायानिर्जितरक्षसे । मायानिर्मितविष्टपाय । मायाश्रयाय । निर्लेपाय । मायानिर्वर्तकाय । सुखिने । सुखिने (खाय) । सुखप्रदाय । नागाय नमः । ४८०

महेशाकृतसंस्तवाय नमः । महेश्वराय । सत्यसन्धाय। शरभाय। कलिपावनाय । रसाय । रसज्ञाय । सते । मानाय । रूपाय । चक्षुषे। श्रुतये । रवाय । घ्राणाय । गन्धाय । स्पर्शनाय । स्पर्शाय । हिङ्कार-मानगाय । नेतिनेतीतिगम्याय । वैकुण्ठभजनप्रियाय नमः । ५००

गिरिशाय नमः । गिरिजाकान्ताय नमः । दुर्वाससे । कवये । अङ्गिरसे । भृगवे । वसिष्ठाय । च्यवनाय । नारदाय । तुम्बुरवे । हराय । विश्वक्षेत्राय । विश्वबीजाय । विश्वनेत्राय । विश्वपाय । याजकाय । यजमानाय । पावकाय । पितृभ्यः । श्रद्धायै नमः । (५२०)

बुद्ध्यै नमः । क्षमायै । तन्द्रायै । मन्त्राय । मन्त्रयित्रे । सुराय। राजेन्द्राय । भूपतये । रूढाय । मालिने । संसारसारथये । नित्याय।

संपूर्णकामाय । भक्तकामदुहे । उत्तमाय । गणपाय । केशवाय । भ्रात्रे । पित्रे । मात्रे नमः । ५४०

मारुतये नमः । सहस्रमूर्ध्ने । सहस्रास्याय । सहस्राक्षाय । सहस्रपदे । कामजिते । कामदहनाय । कामाय । काम्यफलप्रदाय । मुद्रोपहारिणे । रक्षोघ्नाय । क्षितिभारहराय । बलाय । नखदंष्ट्रायुधाय। विष्णुभक्ताय । भक्ताभयप्रदाय । दर्पघ्ने । दर्पदाय । दंष्ट्राशतमूर्तये। अमूर्तिमते नमः । ५६०

महानिधये नमः । महाभागाय । महाभर्गाय । महर्द्धिदाय । महाकाराय । महायोगिने । महातेजसे । महाद्युतये । महाकर्मणे । महानादाय । महामन्त्राय । महामतये । महाशमाय । महोदाराय । महादेवात्मकाय । विभवे । रुद्रकर्मणे । क्रूरकर्मणे । रत्ननाभाय । कृतागमाय नमः । ५८०

अम्भोधिलङ्घनाय नमः । सिद्धाय । सत्यधर्मणे । प्रमोदनाय । जितामित्राय । जयाय । सोमाय । विजयाय । वायुवाहनाय । जीवाय । धात्रे । सहस्रांशवे । मुकुन्दाय । भूरिदक्षिणाय । सिद्धार्थाय । सिद्धिदाय । सिद्धाय । संकल्पाय । सिद्धिहेतुकाय । सप्तपाताल चरणाय नमः । ६००

सप्तर्षिगण वन्दिताय नमः । सप्ताब्धिलङ्घनाय । वीराय । सप्तद्वीपोरुमण्डलाय । सप्ताङ्गराज्यसुखदाय । सप्तमातृनिषेविताय । सप्तलोकैकमकुटाय । सप्तहोत्राय । स्वराश्रयाय । सप्तसामोपगीताय। सप्तपातालसंश्रयाय । सप्तच्छन्दोनिधये। सप्तच्छन्दाय । सप्तजनाश्रयाय । मेधादाय । कीर्तिदाय । शोकहारिणे । दौर्भाग्यनाशनाय । सर्ववश्य-कराय । गर्भदोषघ्ने नमः । ६२०

पुत्रपौत्रदाय नमः । प्रतिवादिमुखस्तम्भाय । रुष्टचित्तप्रसादनाय । पराभिचारशमनाय । दुःखघ्ने । बन्धमोक्षदाय। नवद्वारपुराधाराय । नवद्वारनिकेतनाय । नरनारायणस्तुत्याय । नवनाथमहेश्वराय । मेखलिने । कवचिने । खड्गिने । भ्राजिष्णवे । जिष्णुसारथये । बहुयोजनविस्तीर्णपुच्छाय । पुच्छहतासुराय । दुष्टहन्त्रे। नियमित्रे । पिशाचग्रहशातनाय नमः । ६४०

बालग्रहविनाशिने नमः । धर्मनेत्रे । कृपाकराय । उग्रकृत्याय। उग्रवेगाय । उग्रनेत्राय । शतक्रतवे । शतमन्युस्तुताय । स्तुत्याय । स्तुतये । स्तोत्रे । महाबलाय । समग्रगुणशालिने । व्यग्राय । रक्षोविनाशनाय । रक्षोग्निदावाय । ब्रह्मेशाय । श्रीधराय । भक्तवत्सलाय । मेघनादाय नमः । ६६०

मेघरूपाय नमः । मेघवृष्टिनिवारणाय । मेघजीवनहेतवे । मेघश्यामाय । परात्मकाय । समीरतनयाय । धात्रे । तत्वविद्या-विशारदाय । अमोघाय । अमोघवृष्टये । अभीष्टदाय। अनिष्टनाशनाय । अर्थाय । अनर्थापहारिणे । समर्थाय । रामसेवकाय। अर्थिने । धन्याय । असुरारातये । पुण्डरीकाक्षाय नमः । ६८०

आत्मभुवे नमः । सङ्कर्षणाय । विशुद्धात्मने। विद्याराशये । सुरेश्वराय । अचलोद्धारकाय । नित्याय । सेतुकृते । रामसारथये । आनन्दाय । परमानन्दाय । मत्स्याय । कूर्माय । निधये । शयाय । वराहाय । नारसिंहाय । वामनाय । जमदग्निजाय । रामाय नमः । ७००

कृष्णाय नमः । शिवाय । बुद्धाय । कल्किने । रामाश्रयाय । हरये । नन्दिने । भृङ्गिणे । चण्डिने । गणेशाय । गणसेविताय । कर्माध्यक्षाय ।

सुरारामाय । विश्रामाय । जगतीपतये । जगन्नाथाय। कपीशाय । सर्वावासाय । सदाश्रयाय । सुग्रीवादिस्तुताय नमः । ७२०

दान्ताय नमः । सर्वकर्मणे । प्लवङ्गमाय । नखदारितरक्षसे । नखयुद्धविशारदाय । कुशलाय । सुधनाय । शेषाय । वासुकये । तक्षकाय । स्वर्णवर्णाय । बलाढ्याय । पुरुजेत्रे । अघनाशनाय । कैवल्यदीपाय । कैवल्याय । गरुडाय । पन्नगाय । गुरवे । क्री क्री रावहतारातिगर्वाय नमः । ७४०

पर्वतभेदनाय नमः । वज्राङ्गाय । वज्रवक्त्राय । भक्तवज्रनिवारकाय । नखायुधाय । मणिग्रीवाय । ज्वालामालिने । भास्कराय । प्रौढप्रतापाय । तपनाय । भक्ततापनिवारकाय । शरणाय। जीवनाय । भोक्त्रे । नानाचेष्टाय । चञ्चलाय । स्वस्थाय । अस्वास्थ्यघ्ने । दुःखशातनाय । पवनात्मजाय नमः । ७६०

पवनाय नमः । पावनाय । कान्ताय । भक्ताङ्गाय । सहनाय । बलाय । मेघनादरिपवे । मेघनादसंहृतराक्षसाय । क्षराय । अक्षराय। विनीतात्मने । वानरेशाय । सताङ्गतये । श्रीकण्ठाय । शितिकण्ठाय। सहायाय । सहनायकाय । अस्थूलाय । अनणवे । भर्गाय नमः । ७८०

देवसंसृतिनाशनाय नमः । अध्यात्मविद्यासाराय । अध्यात्मकुशलाय । सुधिये । अकल्मषाय । सत्यहेतवे । सत्यदाय । सत्यगोचराय । सत्यगर्भाय । सत्यरूपाय । सत्याय । सत्यपराक्रमाय। अञ्जनाप्राणलिङ्गाय । वायुवंशोद्भवाय । श्रुतये । भद्ररूपाय । रुद्ररूपाय । सुरूपाय । चित्ररूपधृशे । मैनाकवन्दिताय नमः । ८००

सूक्ष्मदर्शनाय नमः । विजयाय । जयाय । क्रान्तदिङ्मण्डलाय। रुद्राय । प्रकटीकृतविक्रमाय । कम्बुकण्ठाय । प्रसन्नात्मने । ह्रस्वनासाय ।

वृकोदराय । लम्बोष्ठाय । कुण्डलिने । चित्रमालिने । योगविदां वराय । विपश्चिते । कवये । आनन्दविग्रहाय । अनल्पनाशनाय । फाल्गुनीसूनवे । अव्यग्राय नमः । ८२०

योगात्मने नमः । योगतत्पराय । योगविदे । योगकर्त्रे । योगयोनये । दिगम्बराय । अकारादिक्षकारान्तवर्णनिर्मितविग्रहाय। उलूखलमुखाय । सिद्धसंस्तुताय । परमेश्वराय । श्लिष्टजङ्घाय । श्लिष्टजानवे । श्लिष्टपाणये । शिखाधराय । सुशर्मणे । अमितधर्मणे । नारायणपरायणाय । जिष्णवे । भविष्णवे । रोचिष्णवे नमः । ८४०

ग्रसिष्णवे नमः । स्थाणवे । हरये । रुद्रानुकृते । वृक्षकम्पनाय। भूमिकम्पनाय । गुणप्रवाहाय । सूत्रात्मने । वीतरागाय । स्तुतिप्रियाय । नागकन्याभयध्वंसिने । कृतपूर्णाय । कपालभृते । अनुकूलाय । अक्षयाय । अपायाय । अनपायाय । वेदपारगाय । अक्षराय । पुरुषाय नमः । ८६०

लोकनाथाय नमः । त्र्यक्षाय । प्रभवे । दृढाय । अष्टाङ्गयोगफलभुवे । सत्यसन्धाय । पुरुष्टुताय । श्मशानस्थाननिलयाय । प्रेतविद्रावण क्षमाय । पञ्चाक्षरपराय । पञ्चमातृकाय । रञ्जनाय । ध्वजाय । योगिनीबृन्द-वन्द्यश्रिये । शत्रुघ्नाय । अनन्तविक्रमाय । ब्रह्मचारिणे । इन्द्रियवपुषे । धृतदण्डाय। दशात्मकाय नमः । ८८०

अप्रपञ्चाय नमः । सदाचाराय । शूरसेनाय । विदारकाय । बुद्धाय । प्रमोदाय । आनन्दाय । सप्तजिह्वपतये । धराय । नवद्वारपुराधाराय । प्रत्यग्राय । सामगायनाय । षट्चक्रधाम्ने । स्वर्लोकभयहृते । मानदाय । मदाय । सर्ववश्यकराय । शक्तये । अनन्ताय । अनन्तमङ्गलाय नमः । ९००

अष्टमूर्तिधराय नमः। नेत्रे। विरूपाय। स्वरसुन्दराय। धूमकेतवे। महाकेतवे। सत्यकेतवे। महारथाय। नन्दिने। प्रियाय। स्वतन्त्राय। मेखलिने। डमरुप्रियाय। लोहिताङ्गाय। समिधे। वह्नये। षड्तवे। शर्वाय। ईश्वराय। फलभुजे नमः। ९२०

फलहस्ताय नमः। सर्वकर्मफलप्रदाय। धर्माध्यक्षाय। धर्मफलाय। धर्माय। धर्मप्रदाय। अर्थदाय। पञ्चविंशतितत्त्वज्ञाय। तारकाय। ब्रह्मतत्पराय। त्रिमार्गवसतये। भीमाय। सर्वदुष्टनिबर्हणाय। ऊर्जःस्वामिने। जलस्वामिने। शूलिने। मालिने। निशाकराय। रक्ताम्बरधराय। रक्ताय नमः। ९४०

रक्तमाल्यविभूषणाय नमः। वनमालिने। शुभाङ्गाय। श्वेताय। श्वेताम्बराय। यूने। जयाय। अजेयपरिवराय। सहस्रवदनाय। कवये। शाकिनीडाकिनीयक्षरक्षोभूतप्रभञ्जनाय। सद्योजाताय। कामगतये। ज्ञानमूर्तये। यशस्कराय। शम्भुतेजसे। सार्वभौमाय। विष्णुभक्ताय। प्लवङ्गमाय। चतुर्णवतिमन्त्रज्ञाय नमः। ९६०

पौलस्त्यबलदर्पघ्ने। सर्वलक्ष्मीप्रदाय। श्रीमते। अङ्गदप्रियवर्धनाय। स्मृतिबीजाय। सुरेशानाय। संसारभयनाशानाय। उत्तमाय। श्रीपरीवाराय। श्रीभुवे। उग्राय। कामदुहे। सदागतये। मातरिश्वने। रामपादाब्जषट्पदाय। नीलप्रियाय। नीलवर्णाय। नीलवर्णप्रियाय। सुहृदे। रामदूताय नमः। ९८०

लोकबन्धवे नमः। अन्तरात्मने। मनोरमाय। श्रीरामध्यानकृते। वीराय। सदाकिंपुरुषस्तुताय। रामकार्यान्तरङ्गाय। शुद्धये। गत्यै। अनामयाय। पुण्यश्लोकाय। परानन्दाय। परेशप्रियसारथये। लोकस्वामिने। मुक्तिदात्रे। सर्वकारणकारणाय। महाबलाय। महावीराय। पारावारगतये। गुरवे नमः। १०००

तारकाय नमः। भगवते । त्रात्रे । स्वस्तिदात्रे । सुमङ्गलाय । समस्तलोकसाक्षिणे । समस्तसुरवन्दिताय । सीतासमेतश्रीरामपाद-सेवाधुरन्धराय नमः । १००८

—*—

# श्री हनुमदष्टोत्तरशतनामस्तोत्रम्—१

सर्वशास्त्रार्थतत्त्वज्ञ सर्वदेवनमस्कृत ।
यत् त्वयो कथितं पूर्वं रामचन्द्रेण धीमता ॥ १

स्तोत्रं समस्तपापघ्नं श्रुत्वा धन्योऽस्मि पद्मज ।
इदानीं श्रोतुमिच्छामि लोकानां हितकाम्यया ॥ २

वायोरंशावतरणमाहात्म्यं सर्वकामदम् ।
वद मे विस्तराद्ब्रह्मन् देवगुह्यमनुत्तमम् ॥ ३

इति पृष्टो नारदेन ब्रह्मा लोकपितामहः ।
नमस्कृत्य जगन्नाथं लक्ष्मीकान्तं परात्परम् ॥ ४

प्रोवाच वायोर्माहात्म्यं नारदाय महात्मने ।
यच्छ्रुत्वा सर्वसौभाग्यं प्राप्नुवन्ति जनाः सदा ॥ ५

इदं रहस्यं पापघ्नं वायोरष्टोत्तरं शतम् ।
विष्णुना लोकनाथेन रमायै कथितं पुरा ॥ ६

रमा मामाह यद्दिव्यं तत्ते वक्ष्यामि नारद ।
इदं पवित्रं पापघ्नं श्रद्धया हृदि धारय ॥ ७

हनुमानञ्जनापुत्रो वायुसूनुर्महाबलः ।
रामदूतो हरिश्रेष्ठः सूरी केसरिनन्दनः ॥ ८

सूर्यश्रेष्ठो महाकायो वज्री वज्रप्रहारवान्।
महासत्त्वो महारूपो ब्रह्मण्यो ब्राह्मणप्रियः ॥ ९

मुख्यप्राणो महाभीमः पूर्णप्रज्ञो महागुरुः।
ब्रह्मचारी वृक्षधरः पुण्यः श्रीरामकिङ्करः ॥ १०

सीताशोकविनाशी च सिंहिकाप्राणनाशकः।
मैनाकगर्वभङ्गश्च छायाग्रहनिवारकः ॥ ११

लङ्कामोक्षप्रदो देवः सीतामार्गणतत्परः।
रामाङ्गुलिप्रदाता च सीताहर्षविवर्धनः ॥ १२

महारूपधरो दिव्यो ह्यशोकवननाशकः।
मन्त्रिपुत्रहरो वीरः पञ्चसेनाग्रमर्दनः ॥ १३

दशकण्ठसुतघ्नश्च ब्रह्मास्त्रवशगोऽव्ययः।
दशास्यसल्लापपरो लङ्कापुरविदाहकः ॥ १४

तीर्णाब्धिः कपिराजश्च कपियूथप्ररञ्जकः।
चूडामणिप्रदाता च श्रीवश्यः प्रियदर्शकः ॥ १५

कौपीनकुण्डलधरः कनकाङ्गदभूषणः।
सर्वशास्त्रसुसम्पन्नः सर्वज्ञो ज्ञानदोत्तमः ॥ १६

मुख्यप्राणो महावेगः शब्दशास्त्रविशारदः।
बुद्धिमान् सर्वलोकेशः सुरेशो लोकरञ्जकः ॥ १७

लोकनाथो महादर्पः सर्वभूतभयापहः।
रामवाहनरूपश्च सञ्जीवाचलभेदकः ॥ १८

कपीनां प्राणदाता च लक्ष्मणप्राणरक्षकः।
रामपादसमीपस्थो लोहितास्यो महाहनुः ॥ १९

रामसन्देशकर्ता च भरतानन्दवर्धनः ।
रामाभिषेकलोलश्च रामकार्यधुरन्धरः ॥ २०

कुन्तीगर्भसमुत्पन्नो भीमो भीमपराक्रमः ।
लक्षागृहाद्विनिर्मुक्तो हिडिंभासुरमर्दनः ॥ २१

धर्मानुजः पाण्डुपुत्रो धनञ्जयसहायवान् ।
बकासुरवधोद्युक्तस्तद्ग्रामपरिरक्षकः ॥ २२

भिक्षाहाररतो नित्यं कुलालगृहमध्यगः ।
पाञ्चाल्युद्वाहसञ्जातसंमोदो बहुकान्तिमान् ॥ २३

विराटनगरे गूढचरः कीचकमर्दनः ।
दुर्योधननिहन्ता च जरासन्धविमर्दनः ॥ २४

सौगन्धिकापहर्ता च द्रौपदीप्राणवल्लभः ।
पूर्णबोधो व्यासशिष्यो यतिरूपो महामतिः ॥ २५

दुर्वादिगजसिंहस्य तर्कशास्त्रस्य खण्डकः ।
बौद्धागमविभेत्ता च साङ्ख्यशास्त्रस्य दूषकः ॥ २६

द्वैतशास्त्रप्रणेता च वेदव्यासमतानुगः ।
पूर्णानन्दः पूर्णसत्वः पूर्णवैराग्यसागरः ॥ २७

(इति श्रुत्वा नारदस्तु वायोश्चरितमद्भुतम् ।
मुदा परमया युक्तः स्तोतुं समुपचक्रमे ॥ २८

रामावतारजाताय हनुमद्रूपिणे नमः ।
वासुदेवस्य भक्ताय भीमसेनाय ते नमः ॥ २९

वेदव्यासमतोद्धारकर्त्रे पूर्णसुखाय च।
दुर्वादिध्वान्तचन्द्राय पूर्णबोधाय ते नमः॥ ३०

गुरुराजाय धन्याय कञ्जनेत्राय ते नमः।
दिव्यरूपाय शान्ताय नमस्ते यतिरूपिणे॥ ३१

स्वान्तस्थवासुदेवाय सच्चित्ताय नमो नमः।
अज्ञानतिमिरार्काय व्यासशिष्याय ते नमः॥ ३२

अथाभिवन्द्य पितरं ब्रह्माणं नारदो मुनिः।
परिक्रम्य विनिर्यातो वासुदेवं हरिं स्मरन्॥) ३३

अष्टोत्तरशतं दिव्यं वायुसूनोर्महात्मनः।
यः पठेच्छ्रद्धया नित्यं सर्वबन्धात् प्रमुच्यते। ३४

सर्वरोगविनिर्मुक्तः सर्वपापैर्न लिप्यते।
राजवश्यं भवेन्नित्यं स्तोत्रस्यास्य प्रभावतः॥ ३५

भूतग्रहनिवृत्तिश्च प्रजावृद्धिश्च जायते।
आयुरारोग्यमैश्वर्यं बलं कीर्तिं लभेत् पुमान्॥ ३६

यः पठेद्वायुचरितं भक्त्या परमया युतः।
सर्वज्ञानसमायुक्तः स याति परमं पदम्॥ ३६

-श्री पद्मोत्तरखण्डतः

* * *

# हनुमदष्टोत्तरशतनामावलिः–१

हनुमते नमः। अञ्जनापुत्राय। वायुसूनवे। महाबलाय। रामदूताय। हरिश्रेष्ठाय। सूरिणे। केसरिनन्दनाय। सूर्यश्रेष्ठाय। महाकायाय। वज्रिणे।

वज्रप्रहारवते । महासत्त्वाय । महारूपाय । ब्रह्मण्याय । ब्राह्मणप्रियाय । मुख्यप्राणाय । महाभीमाय । पूर्णप्रज्ञाय। महागुरवे नमः । २०

ब्रह्मचारिणे नमः । वृक्षधराय । पुण्याय । श्रीरामकिङ्कराय । सीताशोकविनाशिने । सिंहिकाप्राणनाशकाय । मैनाकगर्वभङ्गाय। छायाग्रहनिवारकाय । लङ्कामोक्षप्रदाय । देवाय । सीतामार्गण तत्पराय । रामाङ्गुलिप्रदात्रे । सीताहर्षविवर्धनाय । महारूपधराय । दिव्याय । अशोकवननाशकाय । मन्त्रिपुत्रहराय । वीराय । पञ्चसेनाग्रमर्दनाय । दशकण्ठसुतघ्नाय नमः । ४०

ब्रह्मास्त्रवशगाय नमः । अव्ययाय । दशास्यसल्लापपराय । लङ्कापुरविदाहकाय । तीर्णाब्धये । कपिराजाय । कपियूथप्ररञ्जकाय। चूडामणिप्रदात्रे । श्रीवश्याय । प्रियदर्शकाय । कौपीनकुण्डलधराय। कनकाङ्गदभूषणाय । सर्वशास्त्रसुसंपन्नाय । सर्वज्ञाय । ज्ञानदोत्तमाय । मुख्यप्राणाय । महावेगाय । शब्दशास्त्रविशारदाय। बुद्धिमते । सर्वलोकेशाय नमः । ६०

सुरेशाय नमः । लोकरञ्जकाय । लोकनाथाय । महादर्पाय । सर्वभूतभयापहाय । रामवाहनरूपाय । सञ्जीवाचलभेदकाय । कपीनां प्राणदात्रे । लक्ष्मणप्राणरक्षकाय । रामपाद समीपस्थाय । लोहितास्याय । महाहनवे । रामसन्देशकर्त्रे । भरतानन्दवर्धनाय । रामाभिषेकलोलाय । रामकार्यधुरन्धराय । कुन्तीगर्भसमुत्पन्नाय । भीमाय । भीमपराक्रमाय । लाक्षागृहाद्विनिर्मुक्ताय नमः । ८०

हिडिंभासुरमर्दनाय नमः । धर्मानुजाय । पाण्डुपुत्राय । धनञ्जयसहायवते । बलासुरवधोद्युक्ताय । तद्ग्रामपरिरक्षकाय । नित्यं भिक्षाहाररताय । कुलालगृहमध्यगाय । पाञ्चाल्युद्वाहसञ्जातसंमोदाय।

बहुकान्तिमते । विराटनगरे गूढचराय । कीचकमर्दनाय । दुर्योधन-
निहन्त्रे । जरासन्धविमर्दनाय । सौगन्धिकापहर्त्रे । द्रौपदीप्राणवल्लभाय ।
पूर्णबोधाय । व्यासशिष्याय । यतिरूपाय । महामतये नमः । १००

दुर्वादिगजसिंहस्य तर्कशास्त्रस्य खण्डनाय नमः ।
बौद्धागमविभेत्त्रे । सांख्यशास्त्रस्य दूषकाय । द्वैतशास्त्रप्रणेत्रे ।
वेदव्यासमतानुगाय । पूर्णानन्दाय । पूर्णसत्वाय । पूर्णवैराग्यसागराय
नमः । १०८

*(हनुमद्भीममध्वपरेयं नामावलिः)*

—*—

# श्रीहनुमदष्टोत्तरशतनामस्तोत्रम्-२

रामदासाग्रणीः श्रीमान् हनूमान् पवनात्मजः ।
आञ्जनेयः कपिश्रेष्ठः केसरिप्रियनन्दनः ॥ १

आरोपितांसयुगलरामरामानुजः सुधीः ।
सुग्रीवसचिवो वालिजितसुग्रीवमाल्यदः ॥ २

रामोपकारविस्मर्तृसुग्रीवसुमतिप्रदः ।
सुग्रीवसत्पक्षपाती रामकार्यसुसाधकः ॥ ३

मैनाकाश्लेषकृन्नागजननीजीवनप्रदः ।
सर्वदेवस्तुतः सर्वदेवानन्दविवर्धनः ॥ ४

छायान्त्रमालाधारी च छायाग्रहविभेदकः ।
सुमेरुसुमहाकायो गोष्पदीकृतवारिधिः ॥ ५

बिडालसदृशाकारस्तप्ततामिसमाननः ।
लङ्कानिभञ्जनः सीतारामंमुद्राङ्गुलीयदः ॥ ६

रामचेष्टानुसारेण चेष्टाकृद्विश्वमङ्गलः ।
श्रीरामहृदयाभिज्ञो निःशेषसुरपूजितः ॥ ७

अशोकवनसंच्छेत्ता शिंशुपावृक्षरक्षकः ।
सर्वरक्षोविनाशार्थं कृतकोलाहलध्वनिः ॥ ८

तलप्रहारतः क्षुण्णबहुकोटिनिशाचरः ।
पुच्छघातविनिष्पिष्टबहुकोटिनराशनः ॥ ९

जम्बुमाल्यन्तकः सर्वलोकान्तरसुतः कपिः ।
स्वदेहप्राप्तपिष्टाङ्गदुर्धर्षाभिधराक्षसः ॥ १०

तलचूर्णितयूपाक्षो विरूपाक्षनिबर्हणः ।
सुरान्तरात्मनः पुत्रो भासकर्णविनाशकः ॥ ११

अद्रिशृङ्गविनिष्पिष्टप्रघसाभिधराक्षसः ।
दशास्यमन्त्रिपुत्रघ्नः पोथिताक्षकुमारकः ॥ १२

सुवञ्चितेन्द्रजिन्मुक्तनानाशस्त्रास्त्रवृष्टिकः ।
इन्द्रशत्रुविनिर्मुक्तशस्त्राचाल्यसुविग्रहः ॥ १३

सुखेच्छयेन्द्रजिन्मुक्तब्रह्मास्त्रवशगः कृती ।
तृणीकृतेन्द्रजित्पूर्वमहाराक्षसयूथपः ॥ १४

रामविक्रमसत्सिन्धुस्तोत्रकोपितरावणः ।
स्वपुच्छवह्निनिर्दग्धलङ्कालङ्कापुरेश्वरः ॥ १५

वह्न्यनिर्दग्धाच्छपुच्छः पुनर्लङ्घितवारिधिः ।
जलदैवतसूनुश्च सर्ववानरपूजितः ॥ १६

सन्तुष्टःकपिभिः सार्धं सुग्रीवमधुभक्षकः ।
रामपादार्पितश्रीमच्चूडामणिरनाकुलः ॥ १७

भक्त्याकृतानेकरामप्रणामो वायुनन्दनः ।
रामालिङ्गनतुष्टाङ्गो रामप्राणप्रियः शुचिः ॥ १८

रामपादैकनिरतविभीषणपरिग्रहः ।
विभीषणश्रियः कर्ता रामलालितनीतिमान् ॥ १९

विद्रावितेन्द्रशत्रुश्च लक्ष्मणैकयशःप्रदः ।
शिलाप्रहारनिष्पिष्टधूम्राक्षरथसारथिः ॥ २०

गिरिशृङ्गविनिष्पिष्टधूम्राक्षो बलवारिधिः ।
अकम्पनप्राणहर्ता पूर्णविज्ञानजिद्घनः ॥ २१

रणाध्वरे कण्ठरोधमारितैकनिकुम्भकः ।
नरान्तकरथच्छेत्ता देवान्तकविनाशकः ॥ २२

मत्ताख्यराक्षसच्छेत्ता युद्धोन्मत्तनिकृन्तनः ।
त्रिशिरोधनुषश्छेत्ता त्रिशिरःखड्गभञ्जनः ॥ २३

त्रिशिरोरथसंहारी त्रिशिरस्त्रिशिरोहरः ।
रावणोरसि निष्पिष्टमुष्टिर्दैत्यभयङ्करः ॥ २४

वज्रकल्पमहामुष्टिघातचूर्णितरावणः ।
अशेषभुवनाधारो लक्ष्मणोद्धरणक्षमः ॥ २५

सुग्रीवप्राणरक्षार्थं मक्षिकोपमविग्रहः ।
कुम्भकर्णत्रिशूलैकसञ्छेत्ता विष्णुभक्तिमान् ॥ २६

नागास्त्रास्पृष्टसद्देहः कुम्भकर्णविमोहकः ।
शस्त्रास्त्रास्पृष्टसद्देहः सुज्ञानी रामसम्मतः ॥ २७

अशोषकपिरक्षार्थमानीतौषधिपर्वतः ।
स्वशक्त्या लक्ष्मणोद्धर्ता लक्ष्मणोज्जीवनप्रदः ॥ २८

लक्ष्मणप्राणरक्षार्थमानीतौषधिपर्वतः ।
तपःकृशाङ्गभरते रामागमनशंसकः ॥ २९

रामस्तुतस्वमहिमा सदा सन्दृष्टराघवः ।
रामच्छत्रधरो देवो वेदान्तपरिनिष्ठितः ॥ ३०

मूलरामायणसुधासमुद्रस्नानतत्परः ।
बदरीषण्डमध्यस्थनारायणनिषेवकः ३॥ ३१

इत्येतच्छ्रीहनूमतो नाम्नामष्टोत्तरं शतम् ।
पठतां शृण्वतां चैव नित्यमभ्यसतां सताम् ॥ ३२

अनन्तपुण्यफलदं महापातकनाशनम् ।
महारोगप्रशमनं महादुःखविनाशनम् ॥ ३३

दुस्तरापत्प्रशमनं तापत्रयविनाशनम् ।
रामक्रोधादिशमनं बाह्यशत्रुविनाशनम् ॥ ३४

अनाद्यज्ञानशमनं संसारभयनाशनम् ।
महाबन्धहरं सम्यक् कर्मबन्धनिकृन्तनम् ॥ ३५

वादे विजयदं नित्यं रणे शत्रुविनाशनम् ।
धनधान्यप्रदं सम्यक् पुत्रपौत्रप्रवर्धनम् ॥ ३६

किमत्र बहुनोक्तेन मोक्षैकफलदं सताम् ।
पूर्णानुग्रहतो विष्णोर्यो वायुर्मोक्षदः सताम् ॥ ३७

तस्य स्तोत्रस्य माहात्म्यं कोपि वर्णयितुं क्षमः ।
श्रुतिस्मृतिपुराणानि भारताद्युक्तयस्तथा ॥ ३८

अस्मिन्नर्थे प्रमाणानि सत्यं सत्यं वदाम्यहम् ।
सत्यं सत्यं पुनः सत्यं नात्र कार्या विचारणा ॥ ३९

-पाञ्चरात्रागमतः

—*—

# हनुमदष्टोत्तरशतनामावलिः–२

रामदासाग्रण्ये नमः । श्रीमते । हनूमते । पवनात्मजाय । आञ्जनेयाय । कपिश्रेष्ठाय । केसरिप्रियनन्दनाय । आरोपितांसयुगलराम रामानुजाय । सुधिये । सुग्रीवसचिवाय । वालिजित सुग्रीवमाल्यदाय । रामोपकारविस्मर्तृसुग्रीवसुमतिप्रदाय। सुग्रीवसत्पक्षपातिने । रामकार्यसुसाधकाय । मैनाकाश्लेषकृते । नागजननीजीवनप्रदाय । सर्वदेवस्तुताय । सर्वदेवानन्दविवर्धनाय। छायान्त्रमालाधारिणे । छायाग्रहविभेदकाय नमः । २०

सुमेरुसुमहाकायाय नमः । गोष्पदीकृतवारिधये । बिडालसदृशाकाराय । तप्तताम्रसमाननाय । लङ्कानिभञ्जनाय । सीतारामसुद्राङ्गुलीयदाय । रामचेष्टानुसारेण चेष्टाकृते । विश्वमङ्गलाय । श्रीरामहृदयाभिज्ञाय । निःशेषसुरपूजिताय । अशोकवनसंच्छेत्रे । शिंशपावृक्षरक्षकाय । सर्वरक्षोविनाशार्थं कृतकोलाहलध्वनये । तलप्रहारतः क्षुण्णबहुकोटिनिशाचराय । पुच्छघातविनिष्पिष्टबहुकोटिनराशनाय । जम्बुमाल्यन्तकाय । सर्वलोकान्तरसुताय । कपये । स्वदेहप्राप्त पिष्टाङ्गदुर्धर्षाभिधराक्षसाय। तलचूर्णितयूपाक्षाय नमः । ४०

विरूपाक्षनिबर्हणाय नमः। सुरान्तरात्मनः पुत्राय। भासकर्णविनाशकाय। अद्रिशृङ्गविनिष्पिष्टप्रघसाभिधराक्षसाय। दशास्यमन्त्रिपुत्रघ्नाय। पोथिताक्षकुमारकाय। सुवञ्चितेन्द्रजिन्मुक्तनानाशस्त्रास्त्रवृष्टिकाय। इन्द्रशत्रुविनिर्मुक्तशस्त्राचाल्यसुविग्रहाय। सुखेच्छयेन्द्रजिन्मुक्तब्रह्मास्त्रवशगाय। कृतिने। तृणीकृतेन्द्रजित्पूर्व महाराक्षसयूथपाय। रामविक्रमसत्सिन्धुस्तोत्रकोपितरावणाय। स्वपुच्छवह्निनिर्दग्धलङ्कालङ्कापुरेश्वराय। वह्न्यनिर्दग्धाच्छपुच्छाय। पुनर्लङ्घितवारिधये। जलदैवतसूनवे। सर्ववानरपूजिताय। सन्तुष्टाय। कपिभिः सार्धं सुग्रीवमधुभक्षकाय। रामपादार्पित श्रीमच्चूडामणये नमः। ६०

अनाकुलाय नमः। भक्त्या कृतानेकरामप्रणामाय। वायुनन्दनाय। रामालिङ्गन तुष्टाङ्गाय। रामप्राणप्रियाय। शुचये। रामपादैकनिरतविभीषणपरिग्रहाय। विभीषणश्रियः कर्त्रे। रामलालितनीतिमते। विद्रावितेन्द्रशात्रवे। लक्ष्मणैकयशःप्रदाय। शिलाप्रहार-निष्पिष्टधूम्राक्षरथसारथये। गिरिशृङ्गविनिष्पिष्टधूम्राक्षाय। बलवारिधये। अकम्पनप्राणहर्त्रे। पूर्णविज्ञानचिद्घनाय। रणाध्वरे कण्ठरोधमारितैकनिकुम्भकाय। नरान्तकरथच्छेत्रे। देवान्तकविनाशकाय। मत्ताख्यराक्षसच्छेत्रे नमः। ८०

युद्धोन्मत्तनिकृन्तनाय नमः। त्रिशिरोधनुषश्छेत्रे। त्रिशिरः खड्गभञ्जनाय नमः। त्रिशिरोरथसंहारिणे। त्रिशिरस्त्रिशिरोहराय। रावणोरसिनिष्पिष्टमुष्टये। दैत्यभयङ्कराय। वज्रकल्पमहामुष्टिघातचूर्णितरावणाय। अशेषभुवनाधाराय। लक्ष्मणोद्धरणक्षमाय। सुग्रीवप्राणरक्षार्थं मक्षिकोपमविग्रहाय। कुम्भकर्णत्रिशूलैकसञ्छेत्रे। विष्णुभक्तिमते। नागास्त्रास्पृष्टसद्देहाय। कुम्भकर्णविमोहकाय।

शस्त्रास्त्रास्पृष्टसद्देहाय। सुज्ञानिने। रामसंमताय। अशेषकपि रक्षार्थ-मानीतौषधिपर्वताय। स्वशक्त्या लक्ष्मणोद्धर्त्रे। लक्ष्मणोज्जीवनप्रदाय नमः (१००)

लक्ष्मणप्राणरक्षार्थमानीतौषधिपर्वताय नमः। तपः कृशाङ्गभरते रामागमनशंसकाय। रामस्तुतस्वमहिम्ने। सदा सन्दृष्टराघवाय। रामच्छत्रधराय देवाय। वेदान्तपरिनिष्ठिताय। मूलरामायण सुधासमुद्र-स्नानतत्पराय। बदरीषण्डमध्यस्थनारायण निषेवकाय नमः। १०८

*(श्रीमद्रामायण किष्किन्धादिकाण्डगत हनुमद्विजयपरा नामावलिः)*

—*—

# हनुमदष्टोत्तरशतनामस्तोत्रम् - ३

अतिपाटलवक्त्राब्जं धृतहेमाद्रिविग्रहम्।
आञ्जनेयं शङ्खचक्रपाणिं चेतसि धीमहि॥ १

पारिजातप्रियो योगी हनूमान् नृहरिप्रियः।
प्लवगेन्द्रः पिङ्गलाक्षः शीघ्रगामी दृढव्रतः॥ २

शङ्खचक्रवराभीतिपाणिरानन्ददायकः।
स्थायी विक्रमसम्पन्नो रामदूतो महायशाः॥ ३

सौमित्रिजीवनकरो लङ्काविक्षोभकारकः।
उदधिक्रमणः सीताशोकहेतुहरो हरिः॥ ४

बली राक्षससंहर्ता दशकण्ठमदापहः।
बुद्धिमान् नैर्ऋतवधूकण्ठसूत्रविदारकः॥ ५

सुग्रीवसचिवो भीमो भीमसेनसहोदरः ।
सावित्रविद्यासंसेवी चरितार्थो महोदयः ॥ ६

वासवाभीष्टदो भव्यो हेमशैलनिवासवान् ।
किंशुकाभोऽग्र्यतनू ऋजुरोमा महामतिः ॥ ७

महाक्रमो वनचरः स्थिरबुद्धिरभीशुमान् ।
सिंहिकागर्भनिर्भेत्ता भेत्ता लङ्कानिवासिनाम् ॥ ८

अक्षशत्रुविनिघ्नश्च रक्षोऽमात्य भयावहः ।
वीरहा मृदुहस्तश्च पद्मपाणिर्जटाधरः ॥ ९

सर्वप्रियः सर्वकामप्रदः प्रांशुमुखश्शुचिः ।
विशुद्धात्मा विज्वरश्च सटावान् पाटलाधरः ॥ १०

भरतप्रेमजनकश्चीरवासा महोक्षधृक् ।
महास्त्रबन्धनसहो ब्रह्मचारी यतीश्वरः ॥ ११

महौषधोपहर्ता च वृषपर्वा वृषोदरः ।
सूर्योपलालितः स्वामी पारिजातावतंसकः ॥ १२

सर्वप्राणधरोऽनन्तः सर्वभूतादिगो मनुः ।
रौद्राकृतिर्भीमकर्मा भीमाक्षो भीमदर्शनः ॥ १३

सुदर्शनकरोऽव्यक्तो व्यक्तास्यो दुन्दुभिस्वनः ।
सुवेलचारी मैनाकहर्षदो हर्षणप्रियः ॥ १४

सुलभः सुव्रतो योगी योगिसेव्यो भयापहः ।
वालाग्निमथितानेकलङ्कावासिगृहोच्चयः ॥ १५

वर्धनो वर्धमानश्च रोचिष्णू रोमशो महान् ।
महादंष्ट्रो महाशूरः सद्गतिः सत्परायणः ॥ १६

सौम्यदर्शी सौम्यवेषो हेमयज्ञोपवीतिमान्।
मौञ्जीकृष्णाजिनधरो मन्त्रज्ञो मन्त्रसारथिः।
जितारातिः षड्मिश्च सर्वप्रियहिते रतः॥ १७

एतैर्नामपदैर्दिव्यैर्यः स्तौति तव सन्निधौ।
हनुमंस्तस्य किं नाम नो भवेद्भक्तिशालिनः॥ १८

प्रणवं च पुरस्कृत्य चतुर्थ्यन्तैर्नमोऽन्तकैः।
एतैर्नामभिरव्यग्रैरुच्यते हनुमान् भवान्॥ १९

ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः।
विनश्यन्ति हनुमंस्ते नाम्नां सङ्कीर्तनक्षणे॥ २०

भगवन् हनुमन् नित्यं राजवश्यं तथैव च।
लक्ष्मीवश्यं च श्रीवश्यमारोग्यं दीर्घमायुषम्॥ २१

प्राधान्यं सकलानां च ज्ञातिप्राधान्यमेव च।
वीर्यं तेजश्च भक्तानां प्रयच्छसि महामते॥ २२

*ब्रह्मवैवर्ते घटिकाचलमाहात्म्यतः*

*(घटिकाचले शंखचक्रधरो हनुमान्)*

* * *

## हनुमदष्टोत्तरशतनामावलिः–३

पारिजातप्रियाय नमः। योगिने। हनुमते। नृहरिप्रियाय। प्लवगेन्द्राय। पिङ्गलाक्षाय। शीघ्रगामिने। दृढव्रताय। शङ्खचक्रवराभीतिपाणये। आनन्ददायकाय। स्थायिने। विक्रमसंपन्नाय।

रामदूताय। महायशसे। सौमित्रिजीवनकराय। लङ्काविक्षोभकारकाय। उदधिक्रमणाय। सीताशोकहेतुहराय। हरये। बलिने नमः। २०

राक्षससंहर्त्रे नमः। दशकण्ठमदापहाय। बुद्धिमते। नैर्ऋतवधूकण्ठ सूत्रविदारकाय। सुग्रीव सचिवाय। भीमाय। भीमसेनसहोदराय। सावित्रविद्यासंसेविने। चरितार्थाय। महोदयाय। वासवाभीष्टदाय। भव्याय। हेमशैलनिवासवते। किंशुकाभाय। अग्र्यतनवे। ऋजुरोम्णे। महामतये। महाक्रमाय। वनचराय। स्थिरबुद्धये नमः। ४०

अभीशुमते नमः। सिंहिकागर्भनिर्भेत्त्रे। लङ्कानिवासिनां भेत्त्रे। अक्षशत्रुविनिघ्नाय। रक्षोऽमात्यभयावहाय। वीरघ्ने। मृदुहस्ताय। पद्मपाणये। जटाधराय। सर्वप्रियाय। सर्वकामप्रदाय। प्रांशुमुखाय। शुचये। विशुद्धात्मने। विज्वराय। सटावते। पाटलाधराय। भरतप्रेमजनकाय। चीरवाससे। महोक्षधृशे नमः। ६०

महास्त्रबन्धनसहाय नमः। ब्रह्मचारिणे। यतीश्वराय। महौषधोपहर्त्रे। वृषपर्वणे। वृषोदराय। सूर्योपलालिताय। स्वामिने। पारिजातावतंसकाय। सर्वप्राणधराय। अनन्ताय। सर्वभूतादिगाय। मनवे। रौद्राकृतये। भीमकर्मणे। भीमाक्षाय। भीमदर्शनाय। सुदर्शनकराय। अव्यक्ताय। व्यक्तास्याय नमः। ८०

दुन्दुभिस्वनाय नमः। सुवेलचारिणे। नाकहर्षदाय। हर्षणप्रियाय। सुलभाय। सुव्रताय। योगिने। योगिसेव्याय। भयापहाय। वालाग्नि-मथितानेकलङ्कावासिगृहोच्चयाय। वर्धनाय। वर्धमानाय। रोचिष्णवे। रोमशाय। महते। महादंष्ट्राय। महाशूराय। सद्गतये। सत्परायणाय। सौम्यदर्शिने नमः।१००

सौम्यवेषाय नमः। हेमयज्ञोपवीतिमते। मौञ्जीकृष्णाजिनधराय। मन्त्रज्ञाय। मन्त्रसारथये। जितारातये। षडूर्मये। सर्वप्रियहितेरताय नमः। १०८

—*—

## श्रीहनुमदष्टोत्तरशतनामस्तोत्रम्–४

### (श्री रघुप्रवीरयतिकृतम्)

यस्य संस्मरणादेव पुरुषार्थचतुष्टयम्।
लभ्यते श्रीहनुमते नमस्तस्मै महात्मने॥ १

हनूमान् वायुतनयः केसरीप्रियनन्दनः।
अञ्जनानन्दनः श्रीमान् पिङ्गाक्षोऽमितविक्रमः॥ २

सर्वलक्षणसम्पन्नः कल्याणगुणवारिधिः।
स्वर्णवर्णो महाकायो महावीर्यो महाद्युतिः॥ ३

महाबलो महौदार्यः सुग्रीवाभीष्टदायकः।
रामदासाग्रणीर्भक्तमनोरथसुरद्रुमः॥ ४

अरिष्टध्वान्ततरणिः सर्वदोषविवर्जितः।
गोष्पदीकृतवाराशिः सीतादर्शनलालसः॥ ५

देवर्षिसंस्तुतश्चित्रकर्मा जितखगेश्वरः।
मनोजवो वायुजवो भगवान् प्लवगर्षभः॥ ६

सुरप्रसूनाभिवृष्टः सिद्धगन्धर्वसेवितः।
दशयोजनविस्तीर्णकायवानम्बराश्रयः॥ ७

महायोगी महोत्साहो महाबाहुः प्रतापवान्।
रामद्वेषिजनासह्यः सज्जनप्रियदर्शनः ॥ ८

रामाङ्गुलीयवान् सर्वश्रमहीनो जगत्पतिः ।
मैनाकविप्रियः सिन्धुसंस्तुतः कद्रुरक्षकः ॥ ९

देवमानप्रदः साधुः सिंहिकावधपण्डितः ।
लङ्किण्यभयदाता च सीताशोकविनाशनः ॥ १०

जानकीप्रियसल्लापश्चूडामणिधरः कपिः ।
दशाननवरच्छेत्ता मशकीकृतराक्षसः ॥ ११

लङ्काभयङ्करः सप्तमन्त्रिपुत्रविनाशनः ।
दुर्धर्षप्राणहर्ता च यूपाक्षवधकारकः ॥ १२

विरूपाक्षान्तकारी च भासकर्णशिरोहरः ।
प्रभासप्राणहर्ता च तृतीयांशविनाशनः ॥ १३

अक्षराक्षससंहारी तृणीकृतदशाननः ।
स्वपुच्छगाग्निनिर्दग्धलङ्कापुरवरोऽव्ययः ॥ १४

आनन्दवारिधिर्धन्यो मेघगम्भीरनिस्वनः ।
कपिप्रवीरसम्पूज्यो मधुभक्षणतत्परः ॥ १५

रामबाहुसमाश्लिष्टो भविष्यच्चतुराननः ।
सत्यलोकेश्वरः प्राणो विभीषणवरप्रदः ॥ १६

धूम्राक्षप्राणहर्ता च कपिसैन्यविवर्धनः ।
त्रिशीर्षान्तकरो मत्तनाशनोऽकम्पनान्तकः ॥ १७

देवान्तकान्तकः शूरो युद्धोन्मत्तविनाशकः ।
निकुम्भान्तकरः शत्रुसूदनः सुरवीक्षितः ।। १८

दशास्यगर्वहर्ता च लक्ष्मणप्राणदायकः ।
कुम्भकर्णजयी शक्रशत्रुगर्वापहारकः ।। १९

सञ्जीवनाचलानेता मृगवानरजीवनः ।
जाम्बवत्प्रियकृद्वीरः सुग्रीवाङ्गदसेवितः ।। २०

भरतप्रियसल्लापः सीताहारविराजितः ।
रामेष्टः फल्गुनसखः शरण्यत्राणतत्परः ।। २१

उत्पत्तिस्थितिसंहारकर्ता किंपुरुषालयः ।
वेदवेदाङ्गतत्वज्ञो भवरोगस्य भेषजम् ।। २२

इत्थं हनुमतः पुण्यं शतमष्टोत्तरं पठन् ।
विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।। २३

कन्यार्थी लभते कन्यां सुतार्थी लभते सुतम्।
कीर्त्यर्थी लभते कीर्तिं मोक्षार्थी मोक्षमाप्नुयात् ।। २४

रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
इदमायुष्करं धन्यं सर्वोपद्रवनाशनम्।। २५

सर्वशत्रुक्षयकरं सर्वपापप्रणाशनम् ।
समस्तयज्ञफलदं सर्वतीर्थफलप्रदम् ।। २६

समस्तवेदफलदं सर्वदानफलप्रदम् ।
पठनीयं महत्पुण्यं सर्वसंपत्समृद्धिदम् ।। २७

एवमष्टोत्तरशतं नाम्नां हनूमतो यतिः ।
रघुप्रवीराभिधानः कृतवान् वाञ्छितार्थदम्।। २८

* * *

## हनुमदष्टोत्तरशतनामावलिः–४

हनुमते नमः । वायुतनयाय । केसरीप्रियनन्दनाय । अञ्जनानन्दनाय । श्रीमते । पिङ्गाक्षाय । अमितविक्रमाय । सर्वलक्षणसंपन्नाय । कल्याणगुणवारिधये । स्वर्णवर्णाय । महाकायाय । महावीर्याय । महाद्युतये । महाबलाय । महौदार्याय । सुग्रीवाभीष्टदायकाय । रामदासाग्रण्ये । भक्तमनोरथसुरद्रुमाय । अरिष्टध्वान्ततरणये । सर्वदोषविवर्जिताय नमः । २०

गोष्पदीकृतवाराशये नमः । सीतादर्शनलालसाय । देवर्षिसंस्तुताय । चित्रकर्मणे । जितखगेश्वराय । मनोजवाय । वायुजवाय। भगवते । प्लवगर्षभाय । सुरप्रसूनाभिवृष्टाय । सिद्धगन्धर्वसेविताय। दशयोजनविस्तीर्णकायवते । अम्बराश्रयाय । महायोगिने । महोत्साहाय । महाबाहवे । प्रतापवते । रामद्वेषिजनासह्याय । सज्जनप्रियदर्शनाय । रामाङ्गुलीयवते नमः । ४०

सर्वश्रमहीनाय नमः । जगत्पतये । मैनाकविप्रियाय । सिन्धुसंस्तुताय । कद्रुरक्षकाय । देवमानप्रदाय । साधवे। सिंहिकावधपण्डिताय । लङ्किण्यभयदात्रे । सीताशोकविनाशनाय। जानकीप्रियसंलापाय । चूडामणिधराय । कपये । दशाननवरच्छेत्रे। मशकीकृतराक्षसाय । लङ्काभयङ्कराय । सप्तमन्त्रिपुत्रविनाशनाय। दुर्धर्षप्राणहर्त्रे । यूपाक्षवधकारकाय । विरूपाक्षान्तकारिणे नमः । ६०

भासकर्णशिरोहराय नमः । प्रभासप्राणहर्त्रे । तृतीयांश-विनाशनाय । अक्षराक्षससंहारिणे । तृणीकृतदशाननाय । स्वपुच्छ-गाग्निनिर्दग्ध लङ्कापुरवराय । अव्ययाय । आनन्दवारिधये। धन्याय । मेघगम्भीर निस्वनाय । कपिप्रवरसंपूज्याय । मधुभक्षण-तत्पराय । रामबाहु समाश्लिष्टाय । भविष्यच्चतुराननाय । सत्य-लोकेश्वराय । प्राणाय । विभीषणवरप्रदाय । धूम्राक्षप्राणहर्त्रे । कपिसैन्यविवर्धनाय । त्रिशीर्षान्तकराय नमः । ८०

मत्तनाशनाय नमः । अकम्पनान्तकाय । देवान्तकान्तकाय । शूराय । युद्धोन्मत्तविनाशकाय । निकुम्भान्तकराय । शत्रुसूदनाय। सुरवीक्षिताय । दशास्यगर्वहर्त्रे । लक्ष्मणप्राणदायकाय । कुम्भकर्ण-जयिने । शक्रशत्रुगर्वापहारकाय । सञ्जीवनाचलानेत्रे । मृतवानर-जीवनाय । जाम्बवत्प्रियकृते । वीराय । सुग्रीवाङ्गदसेविताय । भरतप्रिय-सल्लापाय । सीताहारविराजिताय। रामेष्टाय नमः । १००

फल्गुनसखाय नमः । शरणत्राणतत्पराय । उत्पत्तिकर्त्रे । स्थितिकर्त्रे । संहारकर्त्रे । किंपुरुषालयाय । वेदवेदाङ्गतत्त्वज्ञाय । भवरोगस्य भेषजाय नमः । १०८

—*—

कार्यकारस्वामिनाथार्यविरचिता

रामनामाङ्किता

## हनुमदष्टोत्तरशतनामस्तुतिः - ९

रामदूतो रामभृत्यो रामचित्तापहारकः ।
रामनामजपासक्तो रामकीर्तिप्रचारकः ।। १

रामालिङ्गनसौख्यज्ञो रामविक्रमहर्षितः ।
रामबाणप्रभावज्ञो रामसेवाधुरन्धरः ॥ २

रामहृत्पद्ममार्तण्डो रामसङ्कल्पपूरकः ।
रामामोदितवाग्वृत्तिः रामसन्देशवाहकः ॥ ३

रामतारकगुह्यज्ञो रामाह्लादनपण्डितः ।
रामभूपालसचिवो रामधर्मप्रवर्तकः ॥ ४

रामानुजप्राणदाता रामभक्तिलतासुमम् ।
रामचन्द्रजयाशंसी रामधैर्यप्रवर्धकः ॥ ५

रामप्रभावतत्त्वज्ञो रामपूजनतत्परः ।
राममान्यो रामहृद्यो रामकृत्यपरायणः ॥ ६

रामसौलभ्यसंवेत्ता रामानुग्रहसाधकः ।
रामार्पितवचश्चित्तदेहवृत्तिप्रवर्त्तितः ॥ ७

रामसामुद्रिकाभिज्ञो रामपादाब्जषट्पदः ।
रामायणमहामालामध्याश्रितमहामणिः ॥ ८

रामायणरसास्वादस्रवदश्रु परिप्लुतः ।
रामकोदण्डटङ्कारसहकारिमहास्वनः ॥ ९

रामसायुज्यसाम्राज्यद्वारोद्घाटनकर्मकृत् ।
रामपादाब्जनिष्यन्दिमधुमाधुर्यलोलुपः ॥ १०

रामकैङ्कर्यमात्रैकपुरुषार्थकृतादरः ।
रामायणमहाम्भोधिमथनोत्थसुधाघटः ॥ ११

रामाख्यकामधुग्दोग्धा रामवक्त्रेन्दुसागरः ।
रामचन्द्रकरस्पर्शा द्रवच्छीतकरोपलः ॥ १२

रामायणमहाकाव्यशुक्तिनिक्षिप्तमौक्तिकः ।
रामायणमहारण्यविहाररतकेसरी ॥ १३

रामपत्न्येकपत्नीत्वसपत्नायितभक्तिमान् ।
रामेङ्गितरहस्यज्ञो राममन्त्रप्रयोगवित् ॥ १४

रामविक्रमवर्षर्तुपूर्वभूनीलनीरदः ।
रामकारुण्यमार्त्तण्ड प्रागुद्यदरुणायितः ॥ १५

रामराज्याभिषेकाम्बुपवित्रीकृतमस्तकः ।
रामविश्लेषदावाग्निशमनोद्यतनीरदः ॥ १६

रामायणवियद्गङ्गाकल्लोलायितकीर्तिमान् ।
रामप्रपन्नवात्सल्यव्रततात्पर्यकोविदः ॥ १७

रामाख्यानसमाश्वस्तसीतामानससंशयः ।
रामसुग्रीवमैत्र्याख्यहव्यवाहेन्धनायितः ॥ १८

रामाङ्गुलीयमाहात्म्यसमेधितपराक्रमः ।
रामार्त्तिध्वंसनचणचूडामणिलसत्करः ॥ १९

रामनाममधुस्यन्दद्वदनाम्बुजशोभितः ।
रामनामप्रभावेण गोष्पदीकृतवारिधिः ॥ २०

रामौदार्यप्रदीपार्चिर्वर्धकस्नेहविग्रहः ।
रामश्रीमुखजीमूतवर्षणोन्मुखचातकः ॥ २१

रामभक्त्येकसुलभब्रह्मचर्यव्रते स्थितः ।
रामलक्ष्मणसंवाहकृतार्थीकृतदोर्युगः ॥ २२

रामलक्ष्मणसीताख्यत्रयीराजितहृद्गुहः ।
रामरावणसंग्रामवीक्षणोत्फुल्लविग्रहः ॥ २३

रामानुजेन्द्रजिद्युद्धलब्धव्रणकिणाङ्कितः ।
रामब्रह्मानुसन्धानविधिदीक्षाप्रदायकः ॥ २४

रामरावणसंग्राममहाध्वरविधानकृत् ।
रामनाममहारत्ननिक्षेपमणिपेटकः ॥ २५

रामताराधिपज्योत्स्नापानोन्मत्तचकोरकः ।
रामायणाख्यसौवर्ण पञ्जरस्थितशारिकः ॥ २६

रामवृत्तान्तविध्वस्तसीताहृदयशल्यकः ।
रामसन्देशवर्षाम्बुवहन्नीलपयोधरः ॥ २७

रामराकाहिमकरज्योत्स्नाधवलविग्रहः ।
रामसेवामहायज्ञदीक्षितो रामजीवनः ॥ २८

रामप्राणो रामवित्तं रामायत्तकलेबरः ।
रामशोकाशोकवनभञ्जनोद्यत्प्रभञ्जनः ॥ २९

रामप्रीतिवसन्तर्तुसूचकायितकोकिलः ।
रामकार्यार्थोपरोधदूरोत्सारणलम्पटः ॥ ३०

रामायणसरोजस्थहंसो रामहिते रतः ।
रामानुजक्रोधवह्निदग्धसुग्रीवरक्षकः ॥ ३१

रामसौहार्दकल्पद्रु सुमोद्गमनदोहदः ।
रामेषुगतिसंवेत्ता रामजैत्ररथध्वजः ॥ ३२

रामब्रह्मनिदिध्यासनिरतो रामवल्लभः ।
रामसीताख्ययुगलयोजको राममानितः ॥ ३३

रामसेनाग्रणी रामकीर्तिघोषणडिण्डिमः ।
रामेतिद्व्यक्षराकारकवचावृतविग्रहः ॥ ३४

रामायणमहावृक्षफलासक्तकपीश्वरः ।
रामपादाश्रयान्वेषिविभीषणविचारवित् ॥ ३५

राममाहात्म्यसर्वस्वं रामसद्गुणगायकः ।
रामजायाविषादा ग्निनिर्दग्धरिपुसैनिकः ॥ ३६

रामकल्पद्रुमूलस्थो रामजीमूतवैद्युतः ।
रामन्यस्तसमस्ताशो रामविश्वासभाजनम् ॥ ३७

रामप्रभावरचितशैत्यवालाग्निशोभितः ।
रामभद्राश्रयोपात्तधीरोदात्तगुणाकरः ॥ ३८

रामदक्षिणहस्ताब्जमुकुटोद्भासिमस्तकः ।
रामश्रीवदनोद्भासिस्मितोत्पुलकमूर्तिमान् ।
रामब्रह्मानुभूत्याप्तपूर्णानन्दनिमज्जितः ॥ ३९

इतीदं रामदूतस्य वायुसूनोर्महात्मनः ।
रामनामाङ्कितं नाम्नामष्टोत्तरशतं शुभम् ॥ ४०

प्रसादादाञ्जनेयस्य देशिकानुग्रहेण च ।
रचितं स्वामिनाथेन कार्यकारेण भक्तितः ॥ ४१

भूयादभीष्टफलदं श्रद्धया पठतां नृणाम् ।
इहलोके परत्रापि रामसायुज्यदायकम् ॥ ४२

* * *

### रामनामाङ्किता

## हनुमदष्टोत्तरशतनामावलिः—५

ओं रामदूताय नमः । रामभृत्याय । रामचित्तापहारकाय । रामनामजपासक्ताय । रामकीर्तिप्रचारकाय । रामालिङ्गनसौख्यज्ञाय। रामविक्रमहर्षिताय । रामबाणप्रभावज्ञाय । रामसेवाधुरन्धराय । रामहृत्पद्ममार्तण्डाय । रामसंकल्पपूरकाय । रामामोदितवाग्वृत्तये। रामसन्देशवाहकाय । रामतारकगुह्यज्ञाय । रामाह्लादनपण्डिताय। रामभूपालसचिवाय । रामधर्मप्रवर्तकाय । रामानुजप्राणदात्रे । रामभक्तिलतासुमाय । रामचन्द्रजयाशंसिने नमः । २०

ओं रामधैर्यप्रवर्धकाय नमः । रामप्रभावतत्त्वज्ञाय । रामपूजनतत्पराय । राममान्याय । रामहृद्याय । रामकृत्यपरायणाय । रामसौलभ्यसंवेत्त्रे । रामानुग्रहसाधकाय । रामार्पितवचश्चित्तदेहवृत्तिप्रवर्तिताय । रामसामुद्रिकाभिज्ञाय । रामपादाब्जषट्पदाय । रामायणमहामालामध्याश्रितमहामणये । रामायणरसास्वादस्रवदश्रुपरिप्लुताय। रामकोदण्डटङ्कारसहकारिमहास्वनाय । रामसायुज्यसाम्राज्य द्वारोद्घाटनकर्मकृते । रामपादाब्जनिष्यन्दिमधुमाधुर्यलोलुपाय । रामकैङ्कर्यमात्रैकपुरुषार्थकृतादराय। रामायणमहाम्भोधिमथनोत्थसुधाघटाय । रामाख्यकामधुग्दोग्ध्रे । रामवक्त्रेन्दुसागराय नमः । ४०

ओं रामचन्द्रकरस्पर्शद्रवच्छीतकरोपलाय नमः । रामायणमहाकाव्यशुक्तिनिक्षिप्तमौक्तिकाय। रामायणमहारण्यविहाररतकेसरिणे । रामपत्न्येकपत्नीत्वसपत्नायितभक्तिमते । रामेङ्गितरहस्यज्ञाय । राममन्त्रप्रयोगविदे । रामविक्रमवर्षर्तुपूर्वभूनीलनीरदाय । रामकारुण्यमार्तण्ड-

प्रागुद्यदरुणायिताय। रामराज्याभिषेकाम्बुपवित्रीकृतमस्तकाय। रामविश्लेषदावाग्निशमनोद्यतनीरदाय। रामायणवियद्गङ्गाकल्लोलायितकीर्तिमते। रामप्रपन्नवात्सल्यव्रततात्पर्यकोविदाय । रामाख्यानसमाश्वस्तसीतामानससंशयाय । रामसुग्रीवमैत्र्याख्यहव्यवाहेन्धनायिताय। रामाङ्गुलीयमाहात्म्यसमेधितपराक्रमाय। रामार्तिध्वंसनचणचूडामणिलसत्कराय । रामनाममधुस्यन्दद्वदनाम्बुजशोभिताय । रामनामप्रभावेण गोष्पदीकृतवारिधये । रामौदार्यप्रदीपार्चिर्वर्धकस्नेहविग्रहाय। रामश्रीमुखजीमूतवर्षणोन्मुखचातकाय नमः । ६०

ओं रामभक्त्यैकसुलभब्रह्मचर्यव्रते स्थिताय नमः । रामलक्ष्मणसंवाहकृतार्थीकृतदोर्युगाय। रामलक्ष्मणसीताख्यत्रयीराजितहृद्गुहाय । रामरावणसङ्ग्रामवीक्षणोत्फुल्लविग्रहाय । रामानुजेन्द्रजिद्युद्धलब्धव्रणकिणाङ्किताय। रामब्रह्मानुसन्धानविधिदीक्षाप्रदायकाय। रामरावणसङ्ग्राममहाध्वरविधानकृते । रामनाममहारत्ननिक्षेपमणिपेटकाय। रामताराधिपज्योत्स्नापानोन्मत्तचकोरकाय। रामायणाख्यसौवर्णपञ्जरस्थितशारिकाय । रामवृत्तान्तविध्वस्तसीताहृदयशल्यकाय। रामसन्देशवर्षाम्बुवहन्नीलपयोधराय। रामराकाहिमकरज्योत्स्नाधवलविग्रहाय। रामसेवामहायज्ञदीक्षिताय । रामजीवनाय । रामप्राणाय । रामवित्ताय । रामायत्तकलेवराय । रामशोकाशोकवनभञ्जनोद्यत्प्रभञ्जनाय। रामप्रीतिवसन्तर्तुसूचकायितकोकिलाय नमः । ८०

ओं रामकार्यार्थोपरोधदूरोत्सारणलम्पटाय नमः । रामायणसरोजस्थहंसाय । रामहिते रताय । रामानुजक्रोधवह्निदग्धसुग्रीवरक्षकाय । रामसौहार्दकल्पद्रुसुमोद्गमनदोहदाय । रामेषुगतिसंवेत्त्रे।

रामजैत्ररथध्वजाय । रामब्रह्मनिदिध्यासनिरताय । रामवल्लभाय। रामसीताख्ययुगलयोजकाय। राममानिताय। रामसेनाग्रण्ये। रामकीर्ति-घोषणडिण्डमाय। रामेतिव्यक्षराकारकवचावृतविग्रहाय। रामायणमहा-वृक्षफलासक्तकपीश्वराय। रामपादाश्रयान्वेषिविभीषण-विचारविदे । राममाहात्म्यसर्वस्वाय । रामसद्गुणगायकाय । रामजायाविषादाग्नि-निर्दग्धरिपुसैनिकाय। रामकल्पद्रुमूलस्थाय नमः । १००

ओं रामजीमूतवैद्युताय नमः । रामन्यस्तसमस्ताशाय । राम-विश्वासभाजनाय। रामप्रभावरचितशैत्यवालाग्निशोभिताय। रामभद्रा-श्रयोपात्तधीरोदात्तगुणाकराय । रामदक्षिण हस्ताब्जमुकुटोद्भासि-मस्तकाय । रामश्रीवदनोद्भासि स्मितोत्पुलकमूर्तिमते । रामब्रह्मानु-भूत्याप्तपूर्णानन्दनिमज्जिताय नमः । १०८

* * *

## श्रीमदाञ्जनेयाष्टोत्तरशतनामस्तोत्रम्-६

(कालिकारहस्यतः)

आञ्जनेयो महावीरो हनुमान्मारुतात्मजः ।
तत्वज्ञानप्रदः सीतादेवीमुद्राप्रदायकः ॥ १

अशोकवनिकाच्छेत्ता सर्वमायाविभञ्जनः ।
सर्वबन्धविमोक्ता च रक्षोविध्वंसकारकः ॥ २

परविद्यापरीहारः परशौर्यविनाशनः ।
परमन्त्रनिराकर्ता परयन्त्रप्रभेदकः ॥ ३

सर्वग्रहविनाशी च भीमसेनसहायकृत् ।
सर्वदुःखहरः सर्वलोकचारी मनोजवः ॥ ४

पारिजातद्रुमूलस्थः सर्वमन्त्रस्वरूपवान् ।
सर्वतन्त्रस्वरूपी च सर्वयन्त्रात्मकस्तथा ॥ ५

कपीश्वरो महाकायः सर्वरोगहरः प्रभुः ।
बलसिद्धिकरः सर्वविद्यासम्पत्प्रदायकः ॥ ६

कपिसेनानायकश्च भविष्यच्चतुराननः ।
कुमारब्रह्मचारी च रत्नकुण्डलदीप्तिमान् ॥ ७

सञ्चलद्वालसन्नद्धलम्बमानशिखोज्ज्वलः ।
गन्धर्वविद्यातत्त्वज्ञो महाबलपराक्रमः ॥ ८

कारागृहविमोक्ता च शृङ्खलाबन्धमोचकः ।
सागरोत्तारकः प्राज्ञो रामदूतः प्रतापवान् ॥ ९

वानरः केसरिसुतः सीताशोकनिवारकः ।
अञ्जनागर्भसम्भूतो बालार्कसदृशाननः ॥ १०

विभीषणप्रियकरो दशग्रीवकुलान्तकः ।
लक्ष्मणप्राणदाता च वज्रकायो महाद्युतिः ॥ ११

चिरञ्जीवी रामभक्तो दैत्यकार्यविघातकः ।
अक्षहन्ता काञ्चनाभः पञ्चवक्त्रो महातपाः ॥ १२

लङ्किणीभञ्जनः श्रीमान् सिंहिकाप्राणभञ्जनः ।
गन्धमादनशैलस्थो लङ्कापुरविदाहकः ॥ १३

सुग्रीवसचिवो धीरः शूरो दैत्यकुलान्तकः ।
सुरार्चितो महातेजा रामचूडामणिप्रदः ॥ १४

कामरूपी पिङ्गलाक्षो वार्धिमैनाकपूजितः ।
कबलीकृतमार्तण्डमण्डलो विजितेन्द्रियः ॥ १५

रामसुग्रीवसन्धाता महारावणमर्दनः ।
स्फटिकाभो वागधीशो नवव्याकृतिपण्डितः ॥ १६

चतुर्बाहुर्दीनबन्धुर्महात्मा भक्तवत्सलः ।
सञ्जीवननगाहर्ता शुचिर्वाग्मी दृढव्रतः ॥ १७

कालनेमिप्रमथनो हरिमर्कटमर्कटः ।
दान्तः शान्तः प्रसन्नात्मा शतकण्ठमदापहृत् ॥ १८

योगी रामकथालोलः सीतान्वेषणपण्डितः ।
वज्रदंष्ट्रो वज्रनखो रुद्रवीर्यसमुद्भवः ॥ १९

इन्द्रजित्प्रहितामोघब्रह्मास्त्रविनिवारकः ।
पार्थध्वजाग्रसंवासी शरपञ्जरभेदकः ॥ २०

दशबाहुर्लोकपूज्यो जाम्बवत्प्रीति वर्धनः ।
सीतासमेत श्रीरामभद्रपूजाधुरन्धरः॥ २१

इत्येवं श्रीहनुमतो नाम्नामष्टोत्तरं शतम् ॥
यः पठेच्छृणुयान्नित्यं सर्वान्कामानवाप्नुयात् ॥ २२

* * *

## आञ्जनेयाष्टोत्तरशतनामावलिः–६

आञ्जनेयाय नमः । महावीराय । हनुमते । मारुतात्मजाय । तत्वज्ञानप्रदाय । सीतादेवीमुद्राप्रदायकाय । अशोकवनिकाच्छेत्रे । सर्वमायाविभञ्जनाय । सर्वबन्धविमोक्त्रे । रक्षोविध्वंसकारकाय । परविद्यापरीहाराय । परशौर्यविनाशनाय । परमन्त्रनिराकर्त्रे । परयन्त्रप्रभेदकाय । सर्वग्रहविनाशिने । भीमसेनसहायकृते ।

सर्वदुःखहराय। सर्वलोकचारिणे। मनोजवाय। पारिजातद्रुमूलस्थाय नमः। २०

सर्वमन्त्रस्वरूपवते नमः। सर्वतन्त्रस्वरूपिणे। सर्वयन्त्रात्मकाय। कपीश्वराय। महाकायाय। सर्वरोगहराय। प्रभवे। बलसिद्धिकराय। सर्वविद्यासंपत्प्रदायकाय। कपिसेनानायकाय। भविष्यच्चतुराननाय। कुमारब्रह्मचारिणे। रत्नकुण्डलदीप्तिमते। सञ्चलद्वालसन्नद्धलंबमान शिखोज्ज्वलाय। गन्धर्वविद्यातत्त्वज्ञाय। महाबलपराक्रमाय। कारागृहविमोक्त्रे। शृङ्खलाबन्धमोचकाय। सागरोत्तारकाय। प्राज्ञाय नमः। ४०

रामदूताय नमः। प्रतापवते। वानराय। केसरिसुताय। सीताशोकनिवारकाय। अञ्जनागर्भसंभूताय। बालार्कसदृशाननाय। विभीषणप्रियकराय। दशग्रीवकुलान्तकाय। लक्ष्मणप्राणदात्रे। वज्रकायाय। महाद्युतये। चिरञ्जीविने। रामभक्ताय। दैत्यकार्यविघातकाय। अक्षहन्त्रे। काञ्चनाभाय। पञ्चवक्त्राय। महातपसे। लङ्किणीभञ्जनाय नमः। ६०

श्रीमते नमः। सिंहिकाप्राणभञ्जनय। गन्धमादनशैलस्थाय। लङ्कापुरविदाहकाय। सुग्रीवसचिवाय। धीराय। शूराय। दैत्यकुलान्तकाय। सुरार्चिताय। महातेजसे। रामचूडामणिप्रदाय। कामरूपिणे। पिङ्गलाक्षाय। वार्धिमैनाकपूजिताय। कबलीकृतमार्ताण्डमण्डलाय। विजितेन्द्रियाय। रामसुग्रीवसन्धात्रे। महारावणमर्दनाय। स्फटिकाभाय। वागधीशाय नमः। ८०

नवव्याकृतिपण्डिताय नमः। चतुर्बाहवे। दीनबन्धवे। महात्मने। भक्तवत्सलाय। सञ्जीवननगाहर्त्रे। शुचये। वाग्मिने। दृढव्रताय।

कालनेमिप्रमथनाय। हरिमर्कटमर्कटाय। दान्ताय। शान्ताय। प्रसन्नात्मने। शतकण्ठमदापहृते। योगिने। रामकथालोलाय। सीतान्वेषणपण्डिताय। वज्रदंष्ट्राय। वज्रनखाय नमः। १००

रुद्रवीर्यसमुद्भवाय नमः। इन्द्रजित्प्रहितामोघब्रह्मास्त्र विनिवारकाय। पार्थध्वजाग्रसंवासिने। शरपञ्जरभेदकाय। दशबाहवे। लोकपूज्याय। जाम्बवत्प्रीतिवर्धनाय। सीतासमेतश्रीरामभद्रपूजा-धुरन्धराय नमः। १०८

—*—

# आञ्जनेयद्वादशनामस्तोत्रम्

हनूमानञ्जनासूनुर्वायुपुत्रो महाबलः।
रामेष्टः फल्गुनसखः पिङ्गाक्षोऽमितविक्रमः॥ १

उदधिक्रमणश्चैव सीताशोकविनाशकः।
लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा॥ २

द्वादशैतानि नामानि कपीन्द्रस्य महात्मनः।
स्वापकाले पठेन्नित्यं यात्राकाले विशेषतः।
तस्य मृत्युभयं नास्ति सर्वत्र विजयी भवेत्॥

* * *

# आञ्जनेयद्वादशनामावलिः

हनूमते नमः। अञ्जनासूनवे। वायुपुत्राय। महाबलाय। रामेष्टाय। फल्गुनसखाय। पिङ्गाक्षाय। अमितविक्रमाय। उदधिक्रमणाय। सीताशोकविनाशकाय। लक्ष्मणप्राणदात्रे। दशग्रीवस्य दर्पघ्ने नमः। (१२)

* * *

# मारुतिकवचम्

ओं नमो भगवते विचित्रवीरहनुमते प्रलयकालानलप्रभा-प्रज्वलनाय। प्रतापवज्रदेहाय। अंजनीगर्भसंभूताय। प्रकटविक्रमवीर-दैत्यदानवयक्षरक्षोगणग्रहबंधनाय। भूतग्रहबंधनाय। प्रेतग्रहबंधनाय। पिशाचग्रहबंधनाय। शाकिनीडाकिनीग्रहबंधनाय। काकिनीकामिनी-ग्रहबंधनाय। ब्रह्मग्रहबंधनाय। ब्रह्मराक्षसग्रहबंधनाय। चोरग्रह-बंधनाय। मारीग्रहबंधनाय्। एहि एहि। आगच्छ आगच्छ। आवेशय आवेशय। मम हृदये प्रवेशय प्रवेशय। स्फुर स्फुर। प्रस्फुर प्रस्फुर। सत्यं कथय। व्याघ्रमुखबन्धन। सर्पमुखबन्धन। राजमुखबन्धन। नारीमुखबन्धन। सभामुखवन्धन। शत्रुमुखबन्धन। सर्वमुखबन्धन। लंकाप्रासादभंजन। अमुकं मे वशमानय। क्लीं क्लीं क्लीं ह्रीं श्रीं श्रीं राजानं वशमानय। श्रीं ह्रीं क्लीं स्त्रिय आकर्षय आकर्षय शत्रून्मर्दय मर्दय मारय मारय चूर्णय चूर्णय खे खे श्रीरामचन्द्राज्ञया मम कार्यसिद्धिं कुरु कुरु ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फट् स्वाहा। विचित्रवीर हनूमन् मम सर्वशत्रून् भस्म कुरु कुरु। हन हन हुं फट्स्वाहा। एकादशशतवारं जपित्वा सर्वशत्रून् वशमानयति नान्यथा इति ॥

* * *

विभीषणकृतं

# हनुमद्वाडवानलस्तोत्रम्

ओं अस्य श्रीहनुमद्वाडवानलस्तोत्रमंत्रस्य। श्रीरामचन्द्र ऋषिः। श्रीवडवानलहनुमान् देवता। मम समस्तरोगप्रशमनार्थं आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं समस्तपापक्षयार्थं सीतारामचन्द्रप्रीत्यर्थं च

हनुमद्वाडवानलस्तोत्रजपमहं करिष्ये । ओं ह्रां ह्रीं ओं नमो भगवते श्रीमहाहनुमते प्रकटपराक्रम सकलदिङ्मण्डलयशोवितान-धवलीकृतजगत्त्रितय वज्रदेह रुद्रावतार लंकापुरीदहन अमलमंत्र उदधिबन्धन दशशिरःकृतांतक सीताश्वसन वायुपुत्र अंजनीगर्भसंभूत श्रीरामलक्ष्मणानन्दकर कपिसैन्यप्राकार सुग्रीवसाह्य रणपर्वतोत्पाटन कुमारब्रह्मचारिन् गभीरनाद सर्वपापग्रहवारण सर्वज्वरोच्चाटन डाकिनीविध्वंसन ओं ह्रां ह्रीं ओं नमो भगवते महावीरवीराय सर्वदुःखनिवारणाय ग्रहमंडलसर्वभूतमंडलसर्वपिशाचमंडलोच्चाटन भूतज्वरऐकाहिकज्वरद्व्याहिकज्वरत्र्याहिकज्वरचातुर्थिकज्वर-संतापज्वरविषमज्वरमाहेश्वरवैष्णवज्वरान् छिंधि छिंधि यक्षब्रह्मराक्षसभूतप्रेतपिशाचान् उच्चाटय उच्चाटय ओं ह्रां श्रीं ओं नमो भगवते श्रीमहाहनुमते ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः आं हां हां हां हां औं सौं एहि एहि एहि ओं हं ओं हं ओं हं ओं नमो भगवते श्रीमहाहनुमते श्रवणचक्षुर्भूतानां शाकिनीडाकिनीनां विषमदुष्टानां सर्वविषं हर हर आकाशभुवनं भेदय भेदय छेदय छेदय मारय मारय शोषय शोषय मोहय मोहय ज्वालय ज्वालय प्रहारय प्रहारय सकलमायां भेदय भेदय ओं ह्रां ह्रीं ओं नमो भगवते महाहनुमते सर्वग्रहोच्चाटन परबलं क्षोभय क्षोभय सकलबंधनमोक्षणं कुरु कुरु शिरः शूलगुल्मशूलसर्वशूलान्निर्मूलय निर्मूलय नागपाशानंतवासुकितक्षककर्कोटककालियान् यक्षकुलजलगतबिलगत-रात्रिंचरदिवाचरसर्वान्निर्विषं कुरु कुरु स्वाहा । राजभयचोरभयपरमंत्र-परयंत्रपरतंत्रपरविद्याश्छेदय छेदय स्वमंत्रस्वयंत्रस्वतंत्रस्वविद्याः प्रकटय प्रकटय सर्वारिष्टान्नाशय नाशय सर्वशत्रून्नाशय नाशय असाध्यं साधय साधय हुं फट् स्वाहा ।। असाध्यसाधक स्वामिन् असाध्यं तव किं वद । रामदूत महाबाहो ममाभीष्टं प्रसाधय ।।

* * *

# हनुमल्लांगूलास्त्रस्तोत्रम्

श्रीमन्तं हनुमन्तमार्तरिपुभिद्भूभृत्तटभ्राजितं
चाल्पद्वालधिबन्धवैरिनिचयं चामीकराद्रिप्रभम्।
अग्‍र्यं रक्तपिशंगनेत्रनलिनं भ्रूभंगभंगस्फुरत्
प्रोद्यच्चण्ड मयूखमण्डलमुखं दुःखापहं दुःखिनाम्॥

कौपीन-कटिसूत्र मौञ्ज्यजिन युग्देहं विदेहात्मजा-
प्राणाधीशपदारविन्दनिरतं स्वान्तः-कृतान्तं द्विषाम्।
ध्यात्वैवं समरांगणस्थितमथानीय स्वहृत्पङ्कजे
संपूज्याखिलपूजनोक्तविधिना संप्रार्थयेदर्चितम्॥

हनुमन्नञ्जनीसूनो महाबलपराक्रम।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १

मर्कटाधिप मार्तण्डमण्डलग्रासकारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ २

अक्षक्षपण पिङ्गाक्ष दितिजासुक्षयंकर।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ३

रुद्रावतारसंसारदुःखभारापहारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ४

श्रीरामचरणाम्भोजमधुपायितमानस।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ५

वालिप्रमथनक्लान्तसुग्रीवोन्मोचनप्रभो।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ६

सीताविरहवारीशभग्नसीतेशतारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ७

रक्षोराजप्रतापाग्निदह्यमानजगद्वन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ८

ग्रस्ताशेषजगत्स्वास्थ्य राक्षसाम्भोधिमन्दर।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ९

पुच्छगुच्छस्फुरद्वीर जगद्दग्धारिपत्तन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १०

जगन्मनोदुरुल्लङ्घ्यापारावारविलङ्घन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ ११

स्मृतमात्रसमस्तेष्टपूरक प्रणतप्रिय।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १२

रात्रिंचरतमोरात्रिकृन्तनैकविकर्तन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १३

जानक्या जानकीजानेः प्रेमपात्र परंतप।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १४

भीमादिकमहाभीमवीरावेशावतारक।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १५

वैदेहीविरहक्लान्तरामरोषैकविग्रह।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १६

वज्राङ्गनखदंष्ट्रेश वज्रिवज्रावगुण्ठन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १७

अखर्वगर्वगन्धर्वपर्वतोद्भेदनस्वर।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १८

लक्ष्मणप्राणसंत्राण त्राततीक्ष्णकरान्वय।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ १९

रामादिविप्रयोगार्त भरताद्यार्तिनाशन।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ २०

द्रोणाचलसमुत्क्षेपसमुत्क्षिप्तारिवैभव।
लोलल्लांगूलपातेन ममारातीन्निपातय। २१

सीताशीर्वादसंपन्न समस्तावयवाक्षत।
लोलल्लांगूलपातेन ममारातीन्निपातय॥ २२

इत्यवेमश्वत्थतलोपविष्टः शत्रुंजयं नाम पठेत्स्वयं यः।
स शीघ्रमेवास्तसमस्तशत्रुः प्रमोदते मारुतजप्रसादात्॥ २३

* * *

# श्रीहनुमत्कवचम्-१

एकदा सुखमासीनं शंकरं लोकशंकरम्।
पप्रच्छ गिरिजा कान्तं कर्पूरधवलं शिवम्॥ १॥

पार्वत्युवाच।

भगवन्देवदेवेश लोकनाथ जगद्गुरो।
शोकाकुलानां लोकानां केन रक्षा भवेद् ध्रुवम्॥ २

संग्रामे संकटे घोरे भूतप्रेतादिके भये।
दुःखदावाग्निसंतप्तचेतसां दुःखभागिनाम्॥ ३

ईश्वर उवाच ।

शृणु देवि प्रवक्ष्यामि लोकानां हितकाम्यया ।
विभीषणाय रामेण प्रेम्णा दत्तं च यत्पुरा ।। ४

कवचं कपिनाथस्य वायुपुत्रस्य धीमतः ।
गुह्यं ते संप्रवक्ष्यामि विशेषाच्छृणु सुन्दरि ।। ५

ॐ अस्य श्री हनुमत्कवचस्तोत्रमन्त्रस्य श्री रामचन्द्र ऋषिः, अनुष्टुप्छन्दः । श्रीमहावीरो हनुमान् देवता। मारुतात्मज इति बीजम् । ॐ हं ह्रां ह्रीं इति कवचम् । ॐ स्वाहा इति कीलकम् । लक्ष्मणप्राणदाता इति बीजम् । सकलकार्यसिद्ध्यर्थे जपे विनियोगः ।

(करन्यासः) ॐ ह्रां अंगुष्ठाभ्यां नमः । ॐ ह्रीं तर्जनीभ्यां नमः । ॐ ह्रूँ मध्यमाभ्यां नमः । ॐ ह्रैं अनामिकाभ्यां नमः । ॐ ह्रौं कनिष्ठिकाभ्यां नमः । ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ।

अङ्गन्यासः - ॐ अञ्जनीसूनवे हृदयाय नमः । ॐ रुद्रमूर्तये शिरसे स्वाहा। ॐ वायुसुताय शिखायै वषट् । ॐ वज्रदेहाय कवचाय हुम् । ॐ रामदूताय नेत्रत्रयाय वौषट् । ॐ ब्रह्मास्त्रनिवारणाय अस्त्राय फट् । रामदूताय विद्महे कपिराजाय धीमहि। तन्नो हनुमान् प्रचोदयात् ।

ॐ हुं इति दिग्बन्धः ।।

ओं ध्यायेद् बालदिवाकरद्युतिनिभं देवारिदर्पापहं
देवेन्द्रप्रमुखप्रशस्तयशसं देदीप्यमानं रुचा ।
सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं
संरक्तारुणलोचनं पवनजं पीताम्बरालंकृतम् ।। १

उद्यन्मार्तण्डकोटिप्रकटरुचियुतं चारुवीरासनस्थं
मौञ्जीयज्ञोपवीतारुणरुचिरशिखाशोभितं कुण्डलांगम्।
भक्तानामिष्टदं तं प्रणतमुनिजनं वेदनादप्रमोदं
ध्यायेद्देवं विधेयं प्लवगकुलपतिं गोष्पदीभूतवार्धिम्॥ २

वज्रांगं पिंगकेशाढ्यं स्वर्णकुण्डलमण्डितम्।
नियुद्धकर्मकुशलं पारावारपराक्रमम्॥ ३

वामहस्ते महावृक्षं दशास्यकरखण्डनम्।
उद्यद्दक्षिणदोर्दण्डं हनुमन्तं विचिन्तये॥ ४

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृतांजलिम्।
कुण्डलद्वयसंशोभिमुखाम्भोजं हरिं भजे॥ ५

उद्यदादित्यसंकाशमुदारभुजविक्रमम्।
कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम्॥ ६

श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम्।
अभयं वरदं दोर्भ्यां कलये मरुदात्मजम्॥ ७

अन्याजित नमस्तेऽस्तु नमस्ते रामपूजित।
प्रस्थानं च करिष्यामि सिद्धिर्भवतु मे सदा॥ ८

यो वारांनिधिमल्पपल्वलमिवोल्लङ्घ्य प्रतापान्वितो
वैदेहीघनशोकतापहरणो वैकुण्ठतत्त्वप्रियः।
अक्षाद्यूर्जितराक्षसेश्वरमहादर्पापहारी रणे
सोऽयं वानरपुंगवोऽवतु सदा युष्मान्समीरात्मजः॥ ९

वज्रांगं पिगकेशं कनकमयलसत्कुण्डलाक्रान्तगण्डं
नानाविद्याधिनाथं करतलविधृतं पूर्णकुम्भं दृढं च।

भक्ताभीष्टाधिकारं निहतनरभुजं सर्वदा सुप्रसन्नं
त्रैलोक्यत्राणहेतुं सकलभुवनगं रामदूतं नमामि ॥ १०

उद्यल्लाङ्गूलकेशप्रचलजलधरं भूममूर्तिं कपीन्द्रं
वन्दे रामाङ्घ्रिपद्मभ्रमणपरिवृतं तत्त्वसारं प्रसन्नम् ।
वज्रांगं वज्ररूपं कनकमयलसत्कुण्डलाक्रान्तगण्डं
दम्भोलिस्तम्भसारप्रहरणविकटं भूतरक्षोधिनाथम् ॥ ११

वामे करे वीरगदां वहन्तं शैलं च दक्षे निजकण्ठलग्नम् ।
दधानमासाद्य सुवर्णवर्णं भजे ज्वलत्कुण्डलं रामदूतम् ॥ १२

पद्मरागमणिकुण्डलत्विषा पाटलीकृतकपोलमण्डलम् ।
दिव्यदेहकदलीवनान्तरे भावयामि पवमाननन्दनम् ॥ १३

ईश्वर उवाच ।

इति वदति विशेषाद्राघवे राक्षसेन्द्रं
प्रमुदितवरचित्तो रावणस्यानुजो हि।
रघुवरवरदूतं पूजयामास भूयः
स्तुतिभिरतिकृतार्थं स्वं परं मन्यमानः ॥ १४

वन्दे विद्युद्वलयसुभगं स्वर्णयज्ञोपवीतं
कर्णद्वन्द्वे कनकरुचिरे कुण्डले धारयन्तम् ।
उच्चैर्हृष्यद्द्युमणिकिरणश्रेणिसम्भाविताांगं
सत्कौपीनं कपिवरवृतं कामरूपं कपीन्द्रम् ॥ १५

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं सततं स्मरामि ॥ १६

न्यासः- ओं नमो भगवते हृदयाय नमः। ॐ आञ्जनेयाय शिरसे स्वाहा। ॐ रुद्रमूर्तये शिखायै वषट्। ॐ रामदूताय कवचाय हुम्। ॐहनुमते नेत्रत्रयाय वौषट्। ॐ अग्निगर्भाय अस्त्राय फट्। ॐ नमो भगवते अंगुष्ठाभ्यां नमः। ॐ आंजनेयाय तर्जनीभ्यां नमः। ॐ रुद्रमूर्तये मध्यमाभ्यां नमः। ओं रामदूताय अनामिकाभ्यां नमः। ॐहनुमते कनिष्ठिकाभ्यां नमः। ॐ अग्निगर्भाय करतलकरपृष्ठाभ्यां नमः।

अथ मन्त्र उच्यते। ॐ ऐं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः। ओं नमो भगवते महाबलपराक्रमाय भूत-प्रेत-पिशाच-शाकिनी-डाकिनी-यक्षिणी-पूतनी-मारी-महामारी-यक्ष-राक्षस-भैरव वेतालग्रहराक्षसादिकं क्षणेन हन हन भंजय भंजय मारय मारय शिक्षय शिक्षय महामाहेश्वररुद्रावतारं हुं फट् स्वाहा।

ॐ नमो भगवते हनुमदाख्यरुद्राय सर्वदुष्टजनमनःस्तंभं कुरु कुरु ह्रां ह्रीं ह्रं ठं ठं ठं फट् स्वाहा।

ॐ नमो भगवते अंजनीगर्भभूताय रामलक्ष्मणानन्दकाय कपिसैन्यप्रकाशनाय पर्वतोत्पाटनाय सुग्रीवसाधकाय रणोच्चाटनाय कुमारब्रह्मचारिणे गम्भीरशब्दोदयाय। ॐ ह्रां ह्रीं ह्रः सर्वदुष्टान् निवारय स्वाहा।

ॐ नमो हनुमते सर्वग्रहान् भूतभविष्यद्वर्तमानान् दूरस्थान् समीपस्थान् सर्वकालदुष्टदुर्बुद्धीनुच्चाटयोच्चाटय परबलानि क्षोभय क्षोभय मम सर्वकार्यं साधय साधय हनुमते ॐ ह्रां ह्रीं ह्रूं फट् जहि ॐ शिवं ॐ सिद्धं ह्रां ह्रीं ह्रौं ॐ स्वाहा

ॐ नमो हनुमते परकृतयन्त्रमन्त्रपराहंकारभूतप्रेतपिशाचपर दृष्टिविघ्नदुर्जनचेटकविद्यासर्वग्रहभयान्निवारय निवारय वध वध पच पच दल दल चिलु चिलु किल किल सर्वकुयन्त्राणि दुष्टवाचं फट् स्वाहा।

ॐ नमो हनुमते पाहि पाहि एहि एहि सर्वग्रहभूतानां शाकिनीडाकिनीनां ज्वल प्रज्वल भूतमण्डलं प्रेतमण्डलं पिशाचमण्डलं निवारय निवारय। भूतज्वरप्रेतज्वरचातुर्थिकज्वरविषमज्वर-माहेश्वरान् छिन्धि छिन्धि भिन्धि भिन्धि अक्षिशूलवक्षःशूलशिरोऽ-भ्यन्तरशूलगुल्मशूलपित्तशूलब्रह्मराक्षसकुलपरकुलपरनागकुविषं नाशय नाशय निर्विषं कुरु कुरु फट्। ॐ ह्रां सर्वदुष्टग्रहान्निवारय स्वाहा।

ॐ नमो हनुमते पवनपुत्राय वैश्वानरमुखाय हनहनान्त्या दृष्ट्या पापदृष्टिं दुष्टदृष्टिं हन हन हनुमदाज्ञया स्फुर स्फुर स्वाहा।

श्री रामचन्द्र उवाच।

हनुमान्पूर्वतः पातु दक्षिणे पवनात्मजः।
पातु प्रतीच्यां रक्षोघ्नः पातु सागरपारगः॥ १

उदीच्यामूर्ध्वगः पातु केसरिप्रियनन्दनः।
अधश्च विष्णुभक्तस्तु पातु मध्यं च पावनिः॥ २

अवान्तरदिशः पातु सीताशोकविनाशनः।
लंकाविदाहकः पातु सर्वापद्भ्यो निरन्तरम्॥ ३

सुग्रीवसचिवः पातु मस्तकं वायुनन्दनः।
भालं पातु महावीरो भ्रुवोर्मध्ये निरन्तरम्॥ ४

नेत्रे छायापहारी च पातु नः प्लवगेश्वरः।
कपोलौ कर्णमूले तु पातु श्रीरामकिंकरः॥ ५

नासाग्रमंजनीसूनुर्वक्त्रं पातु हरीश्वरः।
वाचं रुद्रप्रियः पातु जिह्वां पिंगललोचनः॥ ६

पातु दन्तान् फाल्गुनेष्टश्चिबुकं दैत्यप्राणहृत्।
पातु कण्ठं च दैत्यारिः स्कन्धौ पातु सुरार्चितः॥ ७

भुजौ पातु महातेजाः करौ च चरणायुधः।
नखान्नखायुधः पातु कुक्षिं पातु कपीश्वरः॥ ८

वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः।
लंकाविभञ्जनः पातु पृष्ठदेशं निरन्तरम्॥ ९

नाभिं च रामदूतस्तु कटिं पात्वनिलात्मजः।
गुह्यं पातु महाप्राज्ञः सक्थिनी च शिवप्रियः॥ १०

ऊरू च जानुनी पातु लंकाप्रासादभंजनः।
जंघे पातु महाबाहुर्गुल्फौ पातु महाबलः॥ ११

अचलोद्धारकः पातु पादौ भास्करसन्निभः।
पादान्ते सर्वसत्वाढ्यः पातु पादांगुलीस्तथा॥ १२

फल श्रुतिः-

स एव पूरुषः श्रेष्ठो भुक्तिं मुक्तिं च विन्दति।
त्रिकालमेककालं वा पठेन्मासत्रयं सदा॥ १४

सर्वान् रिपून्क्षणाद् जित्वा स पुमांच्छ्रियमाप्नुयात्।
मध्यरात्रे जले स्थित्वा सप्तवारं पठेद्यदि॥ १५

क्षयापस्मारकुष्ठादितापत्रयनिवारणम्।
आर्किवारेऽश्वत्थमूले स्थित्वा पठति यः पुमान्॥ १६

स एव जयमाप्नोति संग्रामेष्वभयं तथा।
अचलां श्रियमाप्नोति संग्रामे विजयी भवेत्॥ १७

यः करे धारयेन्नित्यं स पुमान् श्रियमाप्नुयात्।
विवाहे दिव्यकाले च द्यूते राजकुले रणे॥ १८

भूतप्रेतमहादुर्गे रणे सागरसम्प्लवे।
दशवारं पठेद्रात्रौ मिताहारो जितेन्द्रियः॥ १९

विजयं लभते लोके मानवेषु नराधिपः।
सिंहव्याघ्रभये चोग्रशरशस्त्रास्त्रपातने॥ २०

शृंखलाबन्धने चैव काराग्रहणकारणे।
कार्यस्तम्भे वह्निदाहे गात्ररोगे च दारुणे॥ २१

शोके महारणे चैव ब्रह्मग्रहविनाशने।
सर्वदा तु पठेन्नित्यं जयमाप्नोत्यसंशयम्॥ २२

धारणविधिः-
भूर्जे वा वसने रक्ते क्षौमे वा तालपत्रके।
त्रिगन्धेनाथवा मष्या लिखित्वा धारयेन्नरः॥ २३

पंचसप्तत्रिलोहैर्वा गोपितं कवचं शुभम्।
गले वा बाहुमूले वा कण्ठे शिरसि धारितम्॥ २४

* * *

## श्री हनुमत्कवचम्-२

अस्य श्री हनुमत्कवचस्य श्री रामचन्द्र भगवान् ऋषिः। वीरहनूमान् देवता। अनुष्टुप् छन्दः। मारुतात्मज इति बीजम्। अञ्जनासूनुरिति

शक्तिः । श्री रामचन्द्रकिङ्कर इति कीलकम् । मम सर्वरक्षार्थं श्री हनूमत्कवचं करिष्ये ।

अथ ध्यानम्—

ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहं
देवेन्द्रप्रमुखप्रशास्तयशसं देदीप्यमानं रुचा ।
सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वं प्रियं
संरक्तायतलोचनं पवनजं पीताम्बरालङ्कृतम् ॥

उद्यन्मार्ताण्डकोटिप्रकररुचिनिभं चारुवीरासनस्थं
मौञ्जीयज्ञोपवीताभरणमुरुशिखं शोभितं कुण्डलाभ्याम् ।
भक्ताभीष्टप्रदानं प्रणयमनुदिनं वेदनादप्रमोदं
ध्यायेद्देवादिदेवं प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ॥

हनूमान् पूर्वतः पातु दक्षिणे पवनात्मजः ।
पातु प्रतीच्यामक्षघ्नः पातु सागरतारकः ॥ १

उदीच्यामूर्ध्वगः पातु केसरिप्रियनन्दनः ।
अधस्ताद्विष्णुभक्तस्तु पातु मध्ये च पावनः ॥ २

लङ्काविदाहकः पातु सर्वापद्भ्यो निरन्तरम् ।
सुग्रीवेशः शिखां पातु मस्तकं वायुनन्दनः ॥ ३

भालं पातु महावीरो भ्रुवोर्मध्ये निरञ्जनः ।
नेत्रे छायापहारी च श्रवणे प्लवगेश्वरः ॥ ४

कपोले कर्णमूले तु पातु श्रीरामकिङ्करः ।
नासिकामञ्जनासूनुः पातु वक्त्रं हरीश्वरः ॥ ५

पातु कण्ठं तु दैत्यारिः स्कन्धौ पातु सुरार्चितः ।
भुजौ पातु महातेजाः करौ तु चरणायुधः ॥ ६

नखान् नखायुधः पातु कुक्षिं पातु हरीश्वरः ।
वक्षो मुद्रापहारी च पातु पार्श्वे भुजायुधः ॥ ७

लङ्काविभञ्जनः पातु पृष्ठदेशो निरन्तरम् ।
नाभिं श्रीरामदूतस्तु कटिं पात्वनिलात्मजः ॥ ८

गुह्यं पातु कपिश्रेष्ठो सक्थिनी हनूमान् प्रभुः ।
ऊरू च जानुनी पातु लङ्काप्रासादभञ्जनः ॥ ९

जङ्घे पातु कपिश्रेष्ठो गुल्फौ पातु महाबलः ।
अचलोद्धारकः पातु पादौ भास्करसन्निभः ॥ १०

अङ्गुलीस्त्वर्जुनसखस्तलं पात्वसुरान्तकः ।
अङ्गान्यमितसत्त्वाढ्यः पातु पादाङ्गुलीस्तथा ॥ ११

सर्वाङ्गानि महाशूरः पातु रोमाणि बाहुमान् ।
हनूमत्कवचं यस्तु पठेद्विद्वान् विचक्षणः ।
स एव पुरुषश्रेष्ठो भुक्तिं मुक्तिं च विन्दति ॥ १२

त्रिकालमेककालं वा पठेन्मासत्रयं पुनः ।
सर्वान् रिपून् रणे जित्वा स पुमान् जयमाप्नुयात् ॥ १३

नाभिमात्रजले स्थित्वा सप्तवारं पठेद्यदि ।
क्षयापस्मारकुष्ठादितापज्वरनिवारणम् ॥ १४

अश्वत्थमूलेऽर्कवारे स्थित्वा पठति यः पुमान् ।
अचलां श्रियमाप्नोति सङ्ग्रामे विजयी भवेत् ॥ १५

यः करे धारयेन्नित्यं सर्वान् कामानवाप्नुयात्।
लिखित्वा पूजयेद्यस्तु स पुमान् जयमाप्नुयात्।। १६

सृङ्खलाबन्धने यस्तु त्विमं जपति मानवः।
तत्क्षणान्मुक्तिमाप्नोति कारागेहे तथैव च।। १७

भूर्जपत्रे लिखित्वा तु बध्नीयात् कण्ठदेशतः।
सर्वकार्यफलं तस्य सर्वत्र विजयी भवेत्।। १८

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये।। १९

यो वारान्निधिमल्पपल्वलमिवोल्लङ्घ्य प्रतापान्वितो
वैदेहीघनशोकतापहरणो वैकुण्ठभक्तप्रियः।
अक्षाद्यूर्जितराक्षसेश्वरमहादर्पापहारी रणे
सोऽयं वानरपुङ्गवोऽवतु सदा चास्मान् समीरात्मजः।। २०

वज्राङ्गं पिङ्गनेत्रं कनकमणिलसत्कुण्डलक्रान्तगण्डं
दम्भोलिस्तम्भपारं प्रहरणविवशीभूतरक्षोधिनाथम्।
उद्यल्लाङ्गूलसक्तप्रबलजलधरं भीममूर्तिं कपीन्द्रं
वन्दे रामाङ्घ्रिपद्मभ्रमरपरिवृतं सत्त्वसारं प्रपन्नम्।। २१

कर्णद्वन्द्वे कनकरुचिरं कुण्डलं धारयन्तं
सत्कौपीनं कपिकुलयुतं भीममूर्तिं कपीन्द्रम्।
वन्दे विद्युज्ज्वलनविलसद्ब्रह्मसूत्रैकनिष्ठं
पुत्रं वायो रविसुतसखं वज्रदेहं वरेण्यम्।। २२

पद्मरागमणिकुण्डलत्विषा पाटलीकृतकपोलमाननम्।
दिव्यहेमकदलीवनान्तरे भावयामि पवमाननन्दनम्।। २३

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम्।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम्॥ २४

वामहस्ते गदायुक्तं पानपात्रकमण्डलुम्।
ऊर्ध्वदण्डं हनूमन्तं हुताशनसमप्रभम्॥ २५

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम्।
कुण्डलद्वयसंशोभिमुखाम्भोजं भजेद्धरिम्॥ २६

निष्कल्मषब्रह्मचर्यं व्रतधारिजितेन्द्रियम्।
त्यक्तासनं महाभागं हनूमन्तं प्रपूजयेत्॥ २७

स्कन्दपुराणतः।

* * *

# श्री पञ्चमुखिवीरहनूमत्कवचम्

अस्य श्रीपञ्चमुखिवीरहनूमत्कवचस्तोत्रमहामन्त्रस्य ब्रह्मा ऋषिः। गायत्री छन्दः। पञ्चमुख्यन्तर्गतः श्रीरामरूपी परमात्मा देवता। रां बीजम्। मं शक्तिः। चन्द्र इति कीलकम्। पञ्चमुख्यन्तर्गत श्री रामरूपिपरमात्मप्रसादसिद्ध्यर्थे मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः। रां अङ्गुष्ठाभ्यां नमः। रीं तर्जनीभ्यां नमः। रूं मध्यमाभ्यां नमः। रैं अनामिकाभ्यां नमः। रौं कनिष्ठिकाभ्यां नमः। रः करतलकरपृष्ठाभ्यां नमः।

रां हृदयाय नमः। रीं शिरसे स्वाहा। रूं शिखायै वषट्। रैं कवचाय हुम्। रौं नेत्राभ्यां वौषट्। रं अस्त्राय फट्। भूर्भुवस्सुवरोम्॥ (इति दिग्बन्धः)

अथ ध्यानम्—

वन्दे वानरनारसिंहखगराट्क्रोडाश्ववक्त्रान्वितं
दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा ।
हस्ताब्जैरसिखेटपुस्तकासुधाकुम्भाङ्कुशादीन् हलान्
खट्वाङ्गं फणिभूरुहं दशभुजं सर्वारिदर्पापहम् ॥

ईश्वर उवाच—

अथ ध्यानं प्रवक्ष्यामि शृणु सर्वाङ्गसुन्दरि ।
यत्कृतं देवदेवेशि ध्यानं हनुमतः परम् ॥ १

पञ्चवक्त्रं महाभीमं त्रिपञ्चनयनैर्युतम् ।
बाहुभिर्दशभिर्युक्तं सर्वकामार्थसिद्धिदम् ॥ २

पूर्वं तु वानरं वक्त्रं कोटिसूर्यसमप्रभम् ।
दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ ३

अन्यत्तु दक्षिणं वक्त्रं नारसिंहं महाद्भुतम् ।
अत्युग्रतेजोज्वलितं भीषणं भयनाशनम् ॥ ४

पश्चिमं गारुडं वक्त्रं वज्रकुण्डं महाबलम् ।
सर्वनागप्रशमनं विषभूतादिकृन्तनम् ॥ ५

उत्तरं सौकरं वक्त्रं कृष्णं दीप्तं महोज्ज्वलम् ।
पातालसिद्धिवेतालज्वररोगादिकृन्तनम् ॥ ६

ऊर्ध्वं हयाननं घोरं दानवान्तकरं परम् ।
एतत्पञ्चमुखं तस्य ध्यायतामभयङ्करम् ॥ ७

खड्गं त्रिशूलं खट्वाङ्गं पाशाङ्कुशसुपर्वतम्।
मुष्टिद्रुमगदाभिन्दिपालज्ञानेन संयुतम्॥ ८

एतान्यायुधजालानि धारयन्तं यजामहे।
प्रेतासनोपविष्टं तु सर्वाभरणभूषितम्॥ ९

दिव्यमालाम्बरधरं दिव्यगन्धानुलेपनम्।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्॥ १०

पञ्चास्यमच्युतमनेकविचित्रवीर्यं
श्रीशङ्खचक्ररमणीयभुजाग्रदेशम्।
पीताम्बरं मकुटकुण्डलनूपुराङ्ग-
मुद्योतितं कपिवरं हृदि भा वयामि॥ ११

मर्कटेश महोत्साह सर्वशोकविनाशक।
शत्रून् संहर मां रक्ष श्रियं दापय मे प्रभो॥ १२

हरिमर्कटमर्कटमन्त्रमिमं परिलिख्यति लिख्यति भूमितले।
यदि नश्यति नश्यति शत्रु कुलं यदि मुञ्चति मुञ्चति वामकरः॥ १३

इति ध्यानम्

श्रीपञ्चमुखहनुमत्कवचस्तोत्रमहामन्त्रपठनं करिष्ये

ओं हरिमर्कटमहामर्कटाय ओं वं वं वं वं वं वं फट् फे फे स्वाहा। ओं हरिमर्कटमहामर्कटाय ओं घं घं घं घं घं घं फट् फे फे स्वाहा। ओं हरिमर्कटमहामर्कटाय ओं खें खें खें खें खें खें फट् फे फे मारणाय स्वाहा। ओं हरिमर्कटमर्कटाय ओं ठं ठं ठं ठं ठं ठं फट् फे फे स्तम्भनाय स्वाहा। ओं हरिमर्कटमर्कटाय ओं ओं ओं ओं ओं ओं फट् फे फे आकर्षणसत्वकाय स्वाहा।

ओं हरिमर्कटमर्कटमन्त्रमिदं
परिलिख्यति लिख्यति भूमितले।
यदि नश्यति नश्यति वामकरे
परिमुञ्चति परिमुञ्चति शृङ्खलिका।

ओं नमो भगवते पञ्चवदनाय पूर्वे कपिमुखाय श्री वीरहनूमते ओं टं टं टं टं टं टं सकलशत्रुसंहाराय हुं फट् फे फे फे फे फे फे स्वाहा। ओं नमो भगवते श्रीपञ्चवदनाय दक्षिणे करालवदन श्री नृसिंहमुखाय श्री वीरहनूमते ओं हं हं हं हं हं हं सकल भूतप्रेतदमनाय महाबलाय हुं फट् फे फे फे फे फे फे स्वाहा। ओं नमो भगवते पञ्चवदनाय पश्चिमे गरुडमुखाय श्री वीरहनूमते ओं मं मं मं मं मं मं महारुद्राय सकलरोगविषपरिहाराय हुं फट् फे फे फे फे फे फे स्वाहा। ओं नमो भगवते पञ्चवदनाय उत्तरे आदिवराहमुखाय श्री वीरहनूमते ओं लं लं लं लं लं लं लक्ष्मणप्राणदात्रे लङ्कापुरीदाहनाय सकलसंपत्कराय पुत्रपौत्राद्यभिवृद्धिकराय ओं नमः स्वाहा। ओं नमो भगवते पञ्चवदनाय ऊर्ध्वमुखस्थितहयग्रीव मुखाय श्री वीरहनूमते ओं रुं रुं रुं रुं रुं रुं रुद्रमूर्तये सकललोकवशीकराय वेदविद्यास्वरूपिणे। ओं नमः स्वाहा। (इति मूलमन्त्रः। बीजमुद्राः प्रदर्शयेत्)

ओं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं स्वाहा। इति दिग्बन्धः

ओं नमो भगवते आञ्जनेयाय महाबलाय हुं फट् फे फे फे फे फे फे स्वाहा। ओं नमो भगवते श्री वीरहनूमते प्रबलपराक्रमाय आक्रान्त दिङ्मण्डलाय शोभिताननाय धवलीकृतवज्रदेहाय जगच्चिन्तकाय रुद्रावताराय लङ्कापुरी दाहनाय उदधिलङ्घनाय सेतुबन्धनाय

दशकण्ठशिरःक्रान्ताय सीताश्वासनाय अनन्तकोटिब्रह्माण्डनायकाय महाबलाय वायुपुत्राय अञ्जनादेवीगर्भसम्भूताय श्री रामलक्ष्मणानन्दकराय कपिसैन्यप्रियकराय सुग्रीवसहायकारण कार्यसाधकाय पर्वतोत्पाटनाय कुमारब्रह्मचारिणे गम्भीरशब्दोदयाय ॥

(श्रीरामचन्द्रदूताय आञ्जनेयाय वायुपुत्राय महाबलाय सीता दुःखनिवारणाय लङ्कादहनकारणाय महाबलप्रचण्डाय कोलाहलसकलब्रह्माण्डविश्वरूपाय सप्तसमुद्रनिरालम्बिताय पिङ्गलनयनाय अमितविक्रमाय सूर्यबिम्बफलसेवनाय दृष्टिनिरालङ्कृताय अङ्गदलक्ष्मणमहाकपिसैन्यप्राणनिर्वाहकाय दशकण्ठविध्वंसनाय रामेष्टाय फल्गुनसखाय सीतासमेतरामचन्द्रप्रसादकाय स्वाहा।)

ओं ह्रीं क्लीं सर्वदुष्टग्रहनिवारणाय सर्वरोगज्वरोच्चाटनाय शाकिनीडाकिनीविध्वंसनाय ओं ह्रीं क्लीं हुं फट् फे फे स्वाहा। ओं नमो भगवते श्री वीरहनूमते सर्वभूतज्वरैकाहिकद्व्याहिकत्र्याहिकचातुर्थिकसन्ततविषमज्वरगुप्तज्वरशीतज्वरमहेश्वरज्वरवैष्णवज्वरादिसर्वज्वरान् छिन्दि छिन्दि भिन्दि भिन्दि यक्षराक्षसब्रह्मराक्षसभूतप्रेतपिशाचानुच्चाटयोच्चाटय ॥ ओं श्रीं ह्रीं हुं फट् फे फे स्वाहा। ओं नमो भगवते श्री वीरहनूमते नमः। ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रः। आह आह। असइ असइ एहि एहि ओं ओं ह्रों ह्रों हुं हुं फट् फे फे स्वाहा। ओं नमो भगवते पवनात्मजाय डाकिनी शाकिनी मोहिनी निःशेषनिरसनाय सर्वविषं निर्विषं कुरु कारयकारय हुं फट् फे फे स्वाहा। ओ नमो भगवते श्री वीरहनुमते सिंहशरभ शार्दूल गण्डभेरुण्डपुरुषमृगाणां ओशाति निरसनाय। क्रमनिरसनक्रमणं कुरु। सर्वरोगान्निवारय निवारय आक्रोशय आक्रोशय शत्रून्मादभयं छिन्दि छिन्दि। छादय छादय। मारय मारय। शोषय

शोषय । मोहय मोहय । ज्वालय ज्वालय । प्रहारय प्रहारय । मम सर्वरोगान् छेदय छेदय । ओं ह्रीं हुं फट् फे फे स्वाहा । ओं नमो भगवते श्रीवीरहनुमते सर्वरोगदुष्टग्रहानुच्चाटय उच्चाटय परबलानि क्षोभय क्षोभय । मम सर्वकार्याणि साधय साधय । शृङ्खलाबन्धनं मोक्षय मोक्षय । कारागृहादिभ्यो मोचय मोचय, शिरः शूलकर्णशूलाक्षिशूल कुक्षिशूल पार्श्वशूलादि महारोगान् निवारय निवारय । नागपाशानन्त-वासुकितक्षककर्कोटक कालगुलियकपद्ममहा पद्मकुमुदाचलचररात्रिचर-दिवाचरादिसर्वविषं निर्विषं कुरु निर्विषं कुरु । सर्वरोगनिवारणं कुरु । सर्वराजसभामुखस्तम्भनं कुरु । स्त्रीजनस्तम्भनं कुरु स्तम्भनं कुरु । सर्वभयचोरभयाग्निभयप्रशमनं कुरु प्रशमनं कुरु । सर्वनरयन्त्र-परतन्त्र-परविद्यां छेदय छेदय । सन्त्रासय सन्त्रासय । मम सर्वविद्यां प्रकटय प्रकटय । पोषय पोषय सर्वारिष्टं शमयशमय सर्वशत्रून् संहारय संहाय्य । सर्वरोगपिशाचबाधां निवारय निवारय । ओं ह्रां ह्रीं ह्रूं ह्रैं फट् फे फे स्वाहा । ओं नमो भगवते श्री वीरहनूमते वरप्रसादकाय सर्वाभीष्टप्रदाय सकलसम्पत्कराय महारक्षकाय ओं जं जं जं जं जं जं जगज्जीवनाय हुं फट् फे फे फे स्वाहा ।

य इदं कवचं नित्यं प्रपठेत् प्रयतो नरः ।
एकवारं पठेन्नित्यं सर्वशत्रुविनाशनम् ।
द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्धनम् ॥ १

त्रिवारं यः पठेन्नित्यं सर्वसम्पत्करं शुभम् ।
चतुर्वारं पठेन्नित्यं सर्वरोगनिवारणम् ॥

पञ्चवारं पठेन्नित्यं सर्वशत्रुवशीकरम् ।
षड्वारं तु पठेन्नित्यं सर्वदेववशीकरम् ॥

सप्तवारं पठेन्नित्यं सर्वसौभाग्यदायकम्।
अष्टवारं पठेन्नित्यमिष्टकामार्थसिद्धिदम्॥

नववारं सप्तकेन सर्वराज्यवशीकरम्।
दशवारं च प्रजपेत् त्रैलोक्यज्ञानदर्शनम्॥

एकादशं जपित्वा तु सर्वसिद्धिकरं नृणाम्।
त्रिसप्तनववारं च राजभोगं च सम्भवेत्॥

द्विसप्तदशवारं तु त्रैलोक्यज्ञानदर्शनम्।
दशैकवारं पठनादिदं मन्त्रं त्रिसप्तकम्॥

स्वजनैस्तु समायुक्तस्त्रैलोक्यविजयी भवेत्।
कवचस्मरणादेव महाफलमवाप्नुयात्।

चन्द्राभं चरणारविन्दयुगलं कौपीनमौञ्जीधरं
नाभ्यां वै कटिसूत्रयुक्तवसनं यज्ञोपवीतं शुभम्।
हस्ताभ्यामवलम्बिताञ्जलिपुटं हारावलिं कुण्डलं
बिभ्रद्दीर्घशिखाप्रसन्नवदनं वन्द्याञ्जनेयं भजे॥

सुदर्शनसंहितातः।

* * *

## पञ्चमुखिहनुमत्कवचम्।

(सुदर्शनसंहितातः)

अस्य श्रीपञ्चमुखि हनुमत्कवच स्तोत्र मन्त्रस्य, ब्रह्मा ऋषिः। गायत्री छन्दः। श्री हनुमान् देवता। रां बीजम्। म शक्तिः, चन्द्रः कीलकम्। ओं रौं कवचाय हुम्। ह्रौं अस्त्राय फट्।

ॐ हरिमर्कटमर्कटाय स्वाहा ॐ नमो भगवते पंचवदनाय पूर्वकपिमुखाय सकलशत्रुसंहारणाय स्वाहा। ओं नमो भगवते पञ्चवदनाय दक्षिणमुखाय करालवदनाय नरसिंहाय सकल भूत प्रमथनाय स्वाहा। ओं नमो भगवते पञ्चवदनाय पश्चिम मुखाय गरुडाननाय सकलविषहराय स्वाहा। ॐ नमो भगवते पंचवदनाय उत्तरमुखाय आदिवराहाय सकलसम्पत्कराय स्वाहा। ॐ नमो भगवते पंचवदनाय ऊर्ध्वमुखाय हयग्रीवाय सकलजनवशकराय स्वाहा।

न्यासाः- अस्य श्रीपंचमुखिहनुमत्कवचस्तोत्रस्य श्रीरामचन्द्र ऋषिः। अनुष्टुप्छन्दः। श्रीरामचन्द्रो देवता। सीता इति बीजम्। हनुमानिति शक्तिः। हनुमत्प्रीत्यर्थे जपे विनियोगः। पुनर्हनुमानिति बीजम्। ॐ वायुपुत्राय इति शक्तिः। अंजनीसुतायेति कीलकम्। श्रीरामचन्द्रवरप्रसादसिद्ध्यर्थे जपे विनियोगः।

ॐ अंजनीसुताय अंगुष्ठाभ्यां नमः। अं रुद्रमूर्तये तर्जनीभ्यां नमः। ओंवायुपुत्राय मध्यमाभ्यां नमः। ॐ अग्निगर्भाय अनामिकाभ्यां नमः। ॐ रामदूताय कनिष्ठिकाभ्यां नमः। ॐ सीताशोकनिवारणाय करतलकरपृष्ठाभ्यां नमः। ॐ अंजनीसुताय हृदयाय नमः। ॐ रुद्रमूर्तये शिरसे स्वाहा। ॐ वायुपुत्राय शिखायै वषट्। ॐ अग्निगर्भाय कवचाय हुम्। ॐ रामदूताय नेत्रत्रयाय वौषट्। ॐ पंचमुखिहनुमते अस्त्राय फट्। ओं पञ्चमुखिहनुमते स्वाहा इति दिग्बन्धः। ध्यानं-वन्दे वानर-नारसिंहखगराट् क्रोडाश्ववक्त्रान्वितं दिव्यालङ्करणं त्रिपञ्चनयनं देदीप्यमानं रुचा। हस्ताब्जैरसिखेट पुस्तक सुधाकुंभांकुशाद्रिं हलं खट्वांगं फणिभूरुहं दशभुजं सर्वारिवीरापहम्॥

श्रीरामदूताय आंजनेयाय वायुपुत्राय महाबलाय सीताशोकनि-वारणाय, महाबलप्रचण्डाय, लंकापुरीदहनाय, फाल्गुनसखाय कोलाहल सकलब्रह्माण्डविश्वरूपाय, सप्तसमुद्रान्तराललंघिताय, पिंगलनयना-यामितविक्रमाय, सूर्यबिम्बफलसेवाधिष्ठित-पराक्रमाय, संजीवन्या - अंगदलक्ष्मणमहाकपिसैन्यप्राणदात्रे दशग्रीवविध्वंसनाय, रामेष्टाय, सीतासहितरामचन्द्रवरप्रसादाय। षट्प्रयोगागमपंचमुखिहनुमन्मन्त्रजपे विनियोगः ।

ॐ हरिमर्कटमर्कटाय स्वाहा। हरिमर्कटमर्कटाय, वं, वं, वं, वं वं वौषट् स्वाहा।

हरिमर्कटमर्कटाय फं, फं, फं, फं, फं, फट् स्वाहा।

ॐ हरिमर्कटमकर्कटाय खं, खं, खं, खं, खं, मारणाय स्वाहा।

ॐ हरिमर्कटमर्कटाय ठं, ठं, ठं, ठं, ठं, स्तम्भनाय स्वाहा।

ॐ हरिमर्कटमर्कटाय डं, डं, डं, डं, डं आकर्षणाय सकलसम्पत्कराय पंचमुखिवीरहनुमते स्वाहा।

उच्चाटने-

ॐ ढं, ढं, ढं, ढं, ढं, कूर्ममूर्तये पंचमुखिहनुमते परयन्त्रतन्त्रोच्चाटनाय स्वाहा। कं, खं, गं, घं, ङं, चं, छं, जं, झं, ञं, टं, ठं, डं, ढं, णं, तं, थं, दं, धं, नं, पं, फं, बं, भं, मं, यं, रं, लं, वं, शं, षं, सं, हं, क्षं, स्वाहा इति दिग्बन्धः।

ॐ पूर्वकपिमुखाय पंचमुखिहनुमते ठं, ठं, ठं, ठं, ठं, सकलशत्रुसंहरणाय स्वाहा।

ॐ दक्षिणमुखाय पंचमुखिहनुमते करालवदनाय नरसिंहाय ह्रां, ह्रां, ह्रां, ह्रां, ह्रां सकलभूतप्रेतदमनाय स्वाहा।

ॐ पश्चिममुखाय गरुडासनाय पंचमुखिवीरहनुमते मं, मं, मं, मं, मं, सकलविषहराय स्वाहा।

ॐ उत्तरमुखे आदिवराहाय लं, लं, लं, लं, लं नृसिंहाय नीलकण्ठाय पंचमुखिहनुमते स्वाहा।

ओं अंजनीसुताय वायुपुत्राय, महाबलाय, रामेष्टफाल्गुनसखाय सीताशोकनिवारणाय, लक्ष्मणप्राणरक्षकाय, कपिसैन्यप्रकाशाय, दशग्रीवाभिमानदहनाय, श्रीरामचन्द्रवरप्रसादकाय, महावीर्याय, प्रथमब्रह्माण्डनायकाय, पंचमुखिहनुमते, भूत-प्रेतपिशाच-ब्रह्मराक्षस-शाकिनी-डाकिनी अन्तरिक्ष-गृह-परयन्त्र-परतन्त्र-सर्वग्रहोच्चाटनाय, सकलशत्रुसंहरणाय, पंचमुखिहनुमद्वरप्रसादाय, सर्वरक्षकाय जं, जं, जं, जं, स्वाहा।

पठित्वेदं तु कवचं महान्तं कवचं पठेत्।
एकवारं पठेन्नित्यं सर्वशत्रुनिवारणम्।। १

द्विवारं तु पठेन्नित्यं पुत्रपौत्रप्रवर्द्धनम्।
त्रिवारं पठते नित्यं सर्वसम्पत्करं परम्।। २

चतुर्वारं पठेन्नित्यं सर्वमर्त्यवशंकरम्।
पंचवारं पठेन्नित्यं सर्वरोगनिवारणम्।। ३

षड्वारं तु पठेन्नित्यं सर्वदेववशीकरम्।
सप्तवारं पठेन्नित्यं सर्वकामार्थसिद्धिदम्।। ४

अष्टवारं पठेन्नित्यं सर्वसौभाग्यदायकम्।
नववारं पठेन्नित्यं सर्वैश्वर्यप्रदायकम्॥ ५

दशवारं पठेन्नित्यं त्रैलोक्यज्ञानदर्शनम्।
एकादशं पठेन्नित्यं सर्वसिद्धिं लभेन्नरः॥ ६

कवचं स्मृतिमात्रेण महालक्ष्मीफलप्रदम्।
तस्माच्च प्रयता भाव्यं कार्यं हनुमतः प्रियम्॥ ७

-श्रीचिन्तामणिरामभद्रे सुदर्शनसंहितायां

* * *

# श्रीसप्तमुखिहनुमत्कवचम्

उक्तं चाथर्वणरहस्ये-

ॐ अस्य श्री सप्तमुखिवीरहनुमत्कवचस्तोत्रमन्त्रस्य नारदऋषिः अनुष्टुप्छंदः श्री सप्तमुखिकपिः परमात्मा देवता। ह्रां बीजम्। ह्रीं शक्तिः ह्रूं कीलकम्। मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः।

ॐ ह्रां ॐ ह्रीं ॐ ह्रूं ॐ ह्रैं ॐ ह्रौं ॐ ह्रः इति हृदयादिन्यासः।
करन्यासश्च

वन्दे वानरसिंहसर्परिपुवाराहाश्वगोमानुषैः
युक्तं सप्तमुखैः करैर्द्रुमगिरिं चक्रं गदां खेटकम्।
खट्वांगं हलमंकुशं फणिसुधाकुम्भौ शराब्जाभयान्
शूलं सप्तशिखं दधानममरैः सेव्यं कपिं कामदम्॥

ब्रह्मोवाच ।

सप्तशीर्ष्णः प्रवक्ष्यामि कवचं सर्वसिद्धिदम् ।
जप्त्वा हनुमतो नित्यं सर्वपापैः प्रमुच्यते ॥ १

सप्तस्वर्गपतिः पायाच्छिखां मे मारुतात्मजः ।
सप्तमूर्धा शिरोऽव्यान्मे सप्तार्चिर्भालदेशकम् ॥ २

त्रिः सप्तनेत्रो नेत्रेऽव्यात्सप्तस्वरगतिः श्रुती ।
नासां सप्तपदार्थोऽव्यान्मुखं सप्तमुखोऽवतु ॥ ३

सप्तजिह्वस्तु रसनां रदान्सप्तहयोऽवतु ।
सप्तच्छदो हरिः पातु कण्ठं बाहू गिरिस्थितः ॥ ४

करौ चतुर्दशकरो भूधरोऽव्यान्ममांगुलीः ।
सप्तर्षिध्यातो हृदयमुदरं कुक्षिसागरः ॥ ५

सप्तद्वीपपतिश्चित्तं सप्तव्याहृतिरूपवान् ।
कटिं मे सप्तसंस्थार्थदायकः सक्थिनी मम ॥ ६

सप्तग्रहस्वरूपी मे जानुनी जंघयोस्तथा ।
सप्तधान्यप्रियः पादौ सप्तपातालधारकः ॥ ७

पशून्धनं च धान्यं च लक्ष्मीं लक्ष्मीप्रदोऽवतु ।
दारान् पुत्रांश्च कन्याश्च कुटुंबं विश्वपालकः ॥ ८

अनुक्तस्थानमपि मे पायाद्वायुसुतः सदा ।
चौरेभ्यो व्यालदंष्ट्रिभ्यः शृंगिभ्यो भूतराक्षसात् ॥ ९

दैत्येभ्योऽप्यथ यक्षेभ्यो ब्रह्मराक्षसजाद्भयात् ।
दंष्ट्राकरालवदनो हनुमान्मां सदाऽवतु ॥ १०

परशस्त्रमन्त्रयन्त्रतन्त्राग्निजलविद्युतः।
रुद्रांशः शत्रुसंग्रामात्सर्वावस्थासु सर्वभृत्।

ॐ नमो भगवते सप्तवदनाय आद्यकपिमुखाय, वीरहनुमते सर्वशत्रुसंहारणाय, ठं, ठं, ठं, ठं, ठं, ठं, ठं, ॐ नमः स्वाहा।

ॐ नमो भगवते सप्तवदनाय, द्वितीयनारसिंहास्याय, अत्युग्रतेजोवपुषे, भीषणाय भयनाशनाय, हं हं हं हं हं हं हं ॐ नमः स्वाहा।

ॐ नमो भगवते सप्तवदनाय तृतीयगरुडवक्त्राय वज्रदंष्ट्राय महाबलाय सर्वरोगविनाशनाय मं मं मं मं मं मं मं ॐ नमः स्वाहा।

ॐ नमो भगवते सप्तवदनाय चतुर्थक्रोडतुण्डाय सौमित्रिरक्षकाय पुत्राद्यभिवृद्धिकराय लं लं लं लं लं लं लं ॐ नमः स्वाहा।

ॐ नमो भगवते सप्तवदनाय पंचमाश्ववदनाय रुद्रमूर्त्तये सर्ववशीकरणाय सर्वागमस्वरूपाय रुं रुं रुं रुं रुं रुं रुं ॐ नमः स्वाहा।

ॐ नमो भगवते सप्तवदनाय षष्ठगोमुखाय सूर्यस्वरूपाय सर्वरोगहराय मुक्तिदात्रे ॐ ॐ ॐ ॐ ॐ ॐ ॐ नमः स्वाहा।

ॐ नमो भगवते सप्तवदनाय सप्तमानुषमुखाय रुद्रावताराय अंजनीसुताय सकलदिग्यशोविस्तारकाय वज्रदेहाय सुग्रीवसाह्यकराय उदधिलंघनाय सीताशुद्धिकराय लंकादहनाय अनेकराक्षसांतकाय रामानन्ददायकाय अनेकपर्वतोत्पाटकाय सेतुबंधकाय कपिसैन्यनायकाय रावणांतकाय ब्रह्मचर्याश्रमिणे कौपीनब्रह्मसूत्रधारकाय रामहृदयाय सर्वदुष्टग्रहनिवारणाय शाकिनीडाकिनीवेतालब्रह्मराक्षस भैरवग्रहयक्षग्रहपिशाचग्रहब्रह्मग्रह क्षत्रियग्रहवैश्यग्रहशूद्रग्रहांत्यज-

ग्रहम्लेच्छग्रहसर्पग्रहोच्चाटकाय मम सर्वकार्यसाधकाय सर्वशत्रुसंहारकाय परयंत्रमंत्रनाशकाय सर्वव्याधिनिकृन्तकाय सर्पादिसर्वस्थावर-जंगमविषस्तंभनकराय सर्वराजभयचोरभयाग्निभयप्रशमनाय आध्यात्मि-काधिदैविकाधिभौतिकतापत्रयनिवारणाय सर्वविद्यासर्वसंपत्सर्व-पुरुषार्थदायकाय असाध्यकार्यसाधकाय सर्ववरप्रदाय सर्वाभीष्टकराय ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रः ॐ नमः स्वाहा।

य इदं कवचं नित्यं सप्तास्यस्य हनूमतः ।
त्रिसंध्यं जपते नित्यं सर्वशत्रुविनाशनम् ॥ १

पुत्रपौत्रप्रदं सर्वं संपद्राज्यप्रदं परम् ।
सर्वतापहरं चायुःकीर्तिदं पुण्यवर्धनम् ॥ २

राजानं स्ववशं नीत्वा त्रैलोक्यविजयी भवेत् ।
इदं हि परमं गोप्यं देयं भक्तियुताय च ॥
न देयं भक्तिहीनाय दत्वा स निरयं व्रजेत् ॥ ३

नामानि सर्वाण्यपवर्गदानि रूपाणि विश्वानि च यस्य सन्ति ।
कर्माणि देवैरपि दुर्घटानि तं मारुतिं सप्तमुखं प्रपद्ये ॥ ४

-सुदर्शनसंहितातः

* * *

# एकादशमुखिहनुमत्कवचम्-१

(रुद्रयामलतः)

ॐ श्रीसमस्तजगन्मङ्गलात्मने नमः।

श्रीदेव्युवाच -

शैवानि गाणपत्यानि शाक्तानि वैष्णवानि च।
कवचानि च सौराणि यानि चान्यानि तानि च॥ १

श्रुतानि देवदेवेश त्वद्वक्त्रान्निःसृतानि च।
किंचिदन्यत्तु देवानां कवचं यदि कथ्यते॥ २

ईश्वर उवाच-
शृणु देवि प्रवक्ष्यामि सावधानावधारय।
हनुमत्कवचं पुण्यं महापातकनाशनम्॥ ३

एतद्गुह्यतमं लोके शीघ्रं सिद्धिकरं परम्।
जयो यस्य प्रगानेन लोकत्रयजितो भवेत्॥ ४

ॐ अस्य श्रीएकादशवक्त्रहनुमत्कवचमालामन्त्रस्य वीररामचन्द्र ऋषिरनुष्टुप्छन्दः। श्री महावीरहनुमान् रुद्रो देवता। ह्रीं बीजं ह्रौं शक्तिः स्फें कीलकम् सर्वदूतस्तम्भनार्थ जिह्वाकीलनार्थं, मोहनार्थं राजमुखी-देवतावश्यार्थं ब्रह्मराक्षसशाकिनीडाकिनीभूतप्रेतादिबाधापरिहारार्थं श्रीहनुमद्दिव्यकवचाख्यमालामन्त्रजपे विनियोगः।

ॐ ह्रौं आञ्जनेयाय अंगुष्ठभ्यां नमः। ॐ स्फें रुद्रमूर्तये तर्जनीभ्यां नमः। ओं स्फें वायुपुत्राय मध्यमाभ्यां नमः। ओं स्फें अञ्जनीगर्भाय अनामिकाभ्यां नमः। ॐ स्फें रामदूताय कनिष्ठिकाभ्यां नमः। ॐ ह्रौं

ब्रह्मास्त्रादिनिवारणाय करतलकरपृष्ठाभ्यां नमः । ॐ ह्रौं आञ्जनेयाय हृदयाय नमः। ॐ स्फें रुद्रमूर्तये शिरसे स्वाहा । ॐ स्फें वायुपुत्राय शिखायै वषट्। ओं ह्रौं अंजनीगर्भाय कवचाय हुम्। ॐ स्फें रामदूताय नेत्रत्रयाय वौषट् । ॐ ह्रौं ब्रह्मास्त्रादिनिवारणाय अस्त्राय फट्। इति न्यासः ।

अथ ध्याम् -

ॐ ध्यायेद्रणे हनुमन्तमेकादशमुखाम्बुजम्।

ध्यायेत्तं रावणोपेतं दशबाहुं त्रिलोचनम्।

हाहाकारैः सदर्पैश्च कम्पयन्तं जगत्त्रयम्।

ब्रह्मादिवन्दितं देवं कपिकोटिसमन्वितम्।

एवं ध्यात्वा जपेद्देवि कवचं परमाद्भुतम्॥

दिग्बन्धाः-

ॐ इन्द्रदिग्भागे गजारूढहनुमते ब्रह्मास्त्रशक्तिसहिताय चौरव्याघ्रपिशाचब्रह्मराक्षसशाकिनीडाकिनीवेतालसमूहोच्चाटनाय मां रक्ष रक्ष स्वाहा-

ॐ अग्निदिग्भागे मेषारुढहनुमते अस्त्रशक्तिसहिताय चौरव्याघ्र-पिशाचब्रह्मराक्षसशाकिनीडाकिनी वेतालसमूहोच्चाटनाय मां रक्ष रक्ष स्वाहा।

ॐ यमदिग्भागे महिषारूढहनुमते खड्गशक्तिसहिताय चौरव्याघ्र पिशाच....।

ॐ निर्ऋतिदिग्भागे नरारूढहनुमते खड्गशक्तिसहिताय चौरव्याघ्र ...।

ॐ वरुणदिग्भागे मकरारूढहनुमते प्राणशक्तिसहिताय चौरव्याघ्र...।

ॐ वायुदिग्भागे मृगारूढहनुमते अंकुशशक्तिसहिताय चौरव्याघ्र...

ॐ कुबेरदिग्भागे अश्वारूढहनुमते गदाशक्तिसहिताय चौरव्याघ्र...।

ॐ ईशानदिग्भागे राक्षसारूढहनुमते पर्वतशक्तिसहिताय चौरव्याघ्र...।

ॐ अन्तरिक्षदिग्भागे वर्तुलहनुमते मुद्गरशक्तिसहिताय चौरव्याघ्र...।

ॐ भूमिदिग्भागे वृश्चिकारूढहनुमते वज्रशक्तिसहिताय चौरव्याघ्र...।

ॐ वज्रमण्डले हंसारूढहनुमते वज्रशक्तिसहिताय चौरव्याघ्र...

मालामन्त्रः

ॐ ह्रीं यीं यं प्रचण्डपराक्रमाय एकादशमुखहनुमते हंसयतिबन्धमतिबन्धवाग्बन्ध भैरुण्डबन्धभूतबन्ध - प्रेतबन्धपिशाचबन्धज्वरबन्धशूलबन्ध-सर्वदेवताबन्ध-रागबन्ध-मुखबन्ध-राजसभाबन्धघोरवीरप्रतापरौद्रभीषणहनुमद्वज्रदंष्ट्राननाय वज्रकुण्डलकौपीनतुलसीवनमालाधराय सर्वग्रहोच्चाटनोच्चाटनाय ब्रह्मराक्षससमूहोच्चाटानाय ज्वरसमूहोच्चाटनाय राजसमूहोच्चाटनाय चौरसमूहोच्चाटनाय शत्रुसमूहोच्चाटनाय दुष्टसमूहोच्चाटनाय मां रक्ष रक्ष स्वाहा ॥ १॥

ॐ वीरहनुमते नमः ।

ॐ नमो भगवते वीरहनुमते पीताम्बरधराय कर्णकुण्डलाद्याभरणालङ्कृतभूषणाय किरीटबिल्ववनमालावि भूषिताय कनकयज्ञोपवीतिने कौपीनकटिसूत्रविराजिताय श्रीवीररामचन्द्रमनोभिलषिताय लंकादिदहनकारणाय घनकुलगिरिवज्रदण्डाय अक्षकुमारसंहारकारणाय ॐ यं ॐ नमो भगवते रामदूताय फट् स्वाहा ॥

ॐ ऐं ह्रीं ह्रौं हनुमते सीतारामदूताय सहस्रमुखराजविध्वंसकाय अंजनीगर्भसम्भूताय शाकिनीडाकिनीविध्वंसनाय किलिकिलिचुकारेण विभीषणाय वीरहनुमद्देवाय ॐ ह्रीं श्रीं ह्रौ ह्रां फट् स्वाहा

ॐ श्रीवीरहनुमते ह्रौं हूं फट् स्वाहा।

ॐ श्रीवीरहनुमते स्फ्रूं हूं फट् स्वाहा।

ॐ श्रीवीरहनुमते ह्रौं हूं फट् स्वाहा।

ॐ श्रीवीरहनुमते स्फ्रूं फट् स्वाहा।

ॐ ह्रां श्रीवीरहनुमते ह्रौं हूं फट् स्वाहा।

ॐ श्रीवीरहनुमते ह्रैं हुं फट् स्वाहा।

ॐ ह्रां पूर्वमुखे वानरमुखहनुमते लं सकलशत्रुसंहारकाय हुं फट् स्वाहा।

ॐ आग्नेयमुखे मत्स्यमुखहनुमते रं सकलशत्रु ०

ॐ दक्षिणमुखे कूर्ममुखहनुमते मं सकलशत्रु ० ॥

ॐ नैर्ऋतिमुखे वराहमुखहनुमते क्षं सकलशत्रु ० ॥

ॐ पश्चिममुखे नारसिंहमुखहनुमते वं सकलशत्रु ० ॥

ॐ वायव्यमुखे गरुडमुखहनुमते यं सकलशत्रु ० ॥

ॐ उत्तरमुखे शरभमुखहनुमते सं सकलशत्रु ० ॥

ॐ ईशानमुखे वृषभमुखहनुमते हूं आं सकलशत्रु ० ॥

ॐ ऊर्ध्वमुखे ज्वालामुखहनुमते आं सकलशत्रु ० ॥

ॐ अधोमुखे मार्जारमुखहनुमते ह्रीं सकलशत्रु ० ॥

ॐ सर्वत्र जगन्मुखे हनुमते स्फ्रूं सकलशत्रु ० ॥

ॐ श्रीसीतारामपादुकाधराय महावीराय वायुपुत्राय कनिष्ठाय ब्रह्मनिष्ठाय एकादशरुद्रमूर्तये महाबलपराक्रमाय भानुमण्डलग्रसनग्रहाय चतुर्मुखवरप्रसादाय महाभयरक्षकाय यं ह्रौं ।

ॐ हस्फें हस्फें हस्फें श्री वीरहनुमते नमः एकादशवीरहनुमन् मां रक्ष रक्ष शान्तिं कुरु कुरु तुष्टिं कुरु करु पुष्टिं कुरु कुरु महारोग्यं कुरु कुरु अभयं कुरु कुरु अविघ्नं कुरु कुरु महाविजयं कुरु कुरु सौभाग्यं कुरु कुरु सर्वत्र विजयं कुरु कुरु महालक्ष्मीं देहि हुं फट् स्वाहा ॥

फलश्रुतिः

इत्येतत्कवचं दिव्यं शिवेन परिकीर्तितम् ।
यः पठेत्प्रयतो भूत्वा सर्वान्कामानवाप्नुयात् ॥

द्विकालमेककालं वा त्रिवारं यः पठेन्नरः ।
रोगान् पुनः क्षणात् जित्वा स पुमान् लभते श्रियम् ॥

मध्याह्ने च जले स्थित्वा चतुर्वारं पठेद्यदि ।
क्षयापस्मारकुष्ठादितापत्रयनिवारणम् ॥

यः पठेत्कवचं दिव्यं हनुमद् ध्यानतत्परः ।
त्रिः सकृद्वा यथाज्ञानं सोऽपि पुण्यवतां वरः ॥

देवमभ्यर्च्य विधिवत्पुरश्चर्यां समारभेत् ।
एकादशशतं जाप्यं दशांशहवनादिकम् ॥

यः करोति नरो भक्त्या कवचस्य समादरम् ।
ततः सिद्धिर्भवेत्तस्य परिचर्याविधानतः ॥

गद्यपद्यमया वाणी तस्य वक्त्रे प्रजायते ।
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥

***

# एकादशमुखिहनुमत्कवचम्-२

लोपामुद्रोवाच—

कुम्भोद्भव दयासिन्धो श्रुतं हनुमतः परम् ।
यन्त्रमन्त्रादिकं सर्वं त्वन्मुखोदीरितं मया ॥ १

दयां कुरु मयि प्राणनाथ वेदितुमुत्सहे ।
कवचं वायुपुत्रस्य एकादशमुखात्मनः ॥ २

इत्येवं वचनं श्रुत्वा प्रियायाः प्रश्रयान्वितम् ।
वक्तुं प्रचक्रमे तत्र लोपामुद्रां प्रति प्रभुः ॥ ३

अगस्त्य उवाच–

नमस्कृत्वा रामदूतं हनुमन्तं महामतिम् ।
ब्रह्मप्रोक्तं तु कवचं शृणु सुन्दरि सादरम् ॥ ४

सनन्दनाय सुमहच्चतुराननभाषितम् ।
कवचं कामदं दिव्यं सर्वरक्षोनिबर्हणम् ।। ५

सर्वसंपत्प्रदं पुण्यं मर्त्यानां मधुरस्वरे ।
ओं अस्य श्रीकवचस्यैकादशचक्रस्य धीमतः ।। ६

हनुमत्कवचमन्त्रस्य सनन्दन ऋषिः स्मृतः ।
प्रसन्नात्मा हनूमांश्च देवताऽत्र प्रकीर्तिता ।। ७

छन्दोऽनुष्टुप् समाख्यातं बीजं वायुसुतस्तथा ।
मुख्यः प्राणः शक्तिरिति विनियोगः प्रतीर्तितः ।। ८

सर्वकामार्थसिद्ध्यर्थे जप एवमुदीरयेत् ।
ओं स्फ्रें बीजं शक्तिधृक् पातु शिरो मे पवनात्मजः ।। ९

क्रौं बीजात्मा नयनयोः पातु मां वानरेश्वरः ।
क्षौं बीजरूपी कर्णौ मे सीताशोकविनाशनः ।। १०

ग्लौं बीजवाच्यो नासां मे लक्ष्मणप्राणदायकः ।
वं बीजार्थश्च कण्ठं मे पातु चाक्षयकारकः ।। ११

रां बीजवाच्यो हृदयं पातु मे कपिनायकः ।
वां बीजकीर्तितः पातु बाहू मे चाञ्जनीसुतः ।। १२

ह्रौ बीजं राक्षसेन्द्रस्य दर्पहा पातु चोदरम् ।
ह्सौं बीजमयो मध्यं पातु लङ्काविदाहकः ।। १३

ओं ह्रीं बीजधरः पातु गुह्यं देवेन्द्रवन्दितः ।
रं बीजात्मा सदा पातु चोरू वारिधिलङ्घनः ।। १४

सुग्रीवसचिवः पातु जानुनी मे मनोजवः ।
पादौ पादतले पातु द्रोणाचलधरो हरिः ॥ १५

आपादमस्तकं पातु रामदूतो महाबलः ।
पूर्वे वानरवक्त्रो मामाग्नेय्यां क्षत्रियान्तकृत् ॥ १६

दक्षिणे नारसिंहस्तु नैरृत्यां गणनायकः ।
वारुण्यां दिशि मामव्यात्खगवक्त्रो हरीश्वरः ॥ १७

वायव्यां भैरवमुखः कौबेर्यां पातु मां सदा ।
क्रोडास्यः पातु मां नित्यमीशान्यां रुद्ररूपधृक् ॥ १८

ऊर्ध्वं हयाननः पातु त्वधः शेषमुखस्तथा ।
रामास्यः पातु सर्वत्र सौम्यरूपी महाभुजः ॥ १९

इत्येवं रामदूतस्य कवचं प्रपठेत्सदा ।
एकादशमुखस्यैतद्गोप्यं वै कीर्तितं मया ॥ २०

रक्षोघ्नं कामदं सौम्यं सर्वसम्पद्विधायकम् ।
पुत्रदं धनदं चोग्रशत्रुसङ्घविमर्दनम् ॥ २१

स्वर्गापवर्गदं दिव्यं चिन्तितार्थप्रदं शुभम् ।
एतत्कवचमज्ञात्वा मन्त्रसिद्धिर्न जायते ॥ २२

चत्वारिंशत्सहस्राणि पठेच्छुद्धात्मको नरः ।
एकवारं पठेन्नित्यं कवचं सिद्धिदं पुमान् ॥ २३

द्विवारं वा त्रिवारं वा पठन्नायुष्यमाप्नुयात् ।
क्रमादेकादशादेवमावर्तनजपात्सुधीः ॥ २४

वर्षान्ते दर्शनं साक्षाल्लभते नात्र संशयः ।
यं यं चिन्तयते चार्थं तं तं प्राप्नोति पूरुषः ॥ २५

ब्रह्मोदीरितमेतद्धि तवाग्रे कथितं महत् ॥ २६

इत्येवमुक्त्वा वचनं महर्षिस्तूष्णींबभूवेन्दुमुखीं निरीक्ष्य ।
संहृष्टचित्ताऽपि तदा तदीयपादौ ननामातिमुदा स्वभर्तुः ॥ २७

अथ मन्त्रः—

स्फ्रें क्रों क्ष्रौं ग्लौं क्ष्रीं क्ष्रौं दुं हां हलौं हसौं ह्रीं रं। स्फ्रें क्रों क्ष्रौं ग्लौं क्ष्रीं क्ष्रौं दुं हां ह्रौं ह्रीं रं।

—अगस्त्यसारसंहितायाः

***

## श्रीहनुमतः लघुपूजाक्रमः ॥

१. ध्यानम् ॥

अतुलितबलधाम स्वर्णशैलाभदेहम्
दनुजवनकृशानुं ज्ञानिनामग्रगण्यम् ।
सकलगुणनिधानं वानराणामधीशम्
रघुपतिप्रियभक्तं वातजातं नमामि ॥
श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः
ध्यायामि ॥

आगच्छ हनुमद्देव त्वं सुवर्चलया सह ।
पूजासमाप्तिपर्यन्तं भव सन्निहितो मुदा ॥

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः आवाहयामि ।

भीमाग्रज महाप्राज्ञ त्वं ममाभिमुखो भव ।
श्रीरामसेवक श्रीमन् प्रसीद जगतां पते ॥

हे स्वामिन्, स्थिरो भव, वरदो भव, सुमुखो भव, सुप्रसन्नो भव ।
स्थिरासनं कुरु ।
देव देव जगन्नाथ केसरिप्रियनन्दन ।
रत्नसिंहासनं तुभ्यं ददामि हनुमत्प्रभो ॥

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
नवरत्नखचित स्वर्णसिंहासनं समर्पयामि ॥

योगिध्येयांघ्रिपद्माय जगतां पतये नमः ।
पाद्यं मयार्पितं देव गृहाण पुरुषोत्तम ॥

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः
पादयोः पाद्यं समर्पयामि ॥

लक्ष्मणप्राणसंरक्ष सीताशोकविनाशन ।
गृहाणार्घ्यं मया दत्तं अञ्जनाप्रियनन्दन ।

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
हस्तयोः अर्घ्यं समर्पयामि ॥

वालाग्रसेतुबन्धाय शताननवधाय च ।
तुभ्यमाचमनं दत्तं प्रतिगृह्णीष्व मारुते ॥

श्री सीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः
मुखे आचमनीयं समर्पयामि ॥

अर्जुनध्वजसंवास दशाननमदापह ।
मधुपर्कं प्रदास्यामि हनुमन् प्रतिगृह्यताम् ।।

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
मधुपर्कं समर्पयापि ।।

गङ्गादिसर्वतीर्थेभ्यः समानीतैर्नवोदकैः ।
भवन्तं स्नपयिष्यामि कपिनायक गृह्यताम् ।।

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
शुद्धोदकस्नानं समर्पयामि ।।

पीताम्बरमिदं तुभ्यं तप्तहाटकसन्निभम् ।
दास्यामि वानरश्रेष्ठ संगृहाण नमोऽस्तु ते ।।

उत्तरीयं तु दास्यमि संसारोत्तारकारण ।
गृहाण च मया प्रीत्या दत्तं धत्स्व यथाविधि ।।

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
वस्त्रं समर्पयामि ।

भूषणानि महार्हाणि किरीटप्रमुखान्यहम् ।
तुभ्यं दास्यामि सर्वेश गृहाण कपिनायक ।
श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
आभरणानि समर्पयामि ।।

कस्तूरीकुङ्कुमामिश्रं कर्पूरागरुवासितम् ।
श्रीचन्दनं तु दास्यामि गृह्यतां हनुमत्प्रभो ।।

श्री सीतासमेत श्रीरामपाद सेवाधुरन्धराय हनुमते नमः ।
गन्धान्धारयामि ।।

सुगन्धीनि सुरूपाणि वन्यानि विविधानि च ।
चम्पकादीनि पुष्पाणि कमलान्युत्पलानि च ॥

तुलसीदलबिल्वानि मनसा कल्पितानि च ।
गृहाण हनुमद्देव प्रणतोऽस्मि पदाम्बुजे ॥

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
पुष्पाणि समर्पयामि ॥

शालीयानक्षतान् रम्यान् पद्मरागसमप्रभान् ।
अखण्डान् खण्डितध्वान्त स्वीकुरुष्व दयानिधे ॥

श्रीसीतासमेतश्रीरामपादसेवाधुरन्धराय हनुमते नमः ।
अक्षतान्समर्पयामि ॥

## अथ अङ्गपूजा ॥

मारुतये नमः । पादौ पूजयामि। सुग्रीवसखाय नमः । गुल्फौ पूजयामि। अङ्गदमित्राय नमः । जङ्घे पूजयामि। रामदासाय नमः। ऊरू पूजयामि। अक्षघ्नाय नमः । कटिं पूजयामि । लङ्कादहनाय नमः। वालं पूजयामि । सञ्जीवननगाहर्त्रे नमः । स्कन्धौ पूजयामि । सौमित्रिप्राणदात्रे नमः । वक्षःस्थलं पूजयामि । कुण्ठितदशकण्ठाय नमः । कण्ठं पूजयामि । रामाभिषेककारिणे नमः । हस्तौ पूजयामि। मन्त्ररचितरामायणाय नमः । वक्त्रं पूजयामि । प्रसन्न वदनाय नमः। वदनं पूजयामि । पिङ्गलनेत्राय नमः । नेत्रे पूजयामि । श्रुतिपरायणाय नमः । श्रोत्रे पूजयामि । ऊर्ध्वपुण्ड्रधारिणे नमः । ललाटं पूजयामि । मणिकण्ठमालिकाय नमः । शिरः पूजयामि । सर्वाभीष्टप्रदाय नमः सर्वाण्यङ्गानि पूजयामि ।

## अथ अष्टोत्तरशतनामपूजा ॥

ओं आञ्जनेयाय नमः। महावीराय नमः। तत्त्वज्ञानप्रदाय नमः। सीतादेवीमुद्राप्रदायकाय नमः। सर्वग्रहविनाशिने नमः। भीमसेनसहायकृते नमः। परविद्यापरीहाराय नमः। परशौर्यविनाशकाय नमः। परयन्त्रनिराकर्त्रे नमः। परमन्त्रप्रभेदकाय नमः। सर्वदुःखहराय नमः। सर्वलोकचारिणे नमः। मनोजवाय नमः। पारिजातद्रुममूलस्थाय नमः। अशोकवनिकाच्छेत्रे नमः। सर्वमायाविभञ्जकाय नमः। सर्वबन्धविमोक्त्रे नमः। रक्षोविध्वंसकारकाय नमः। सर्वयन्त्रात्मकाय नमः। कपीश्वराय नमः।२०

ओं महाकायाय नमः। सर्वरोगहराय नमः। सर्वविद्यासम्पत्प्रदायकाय नमः। कपिसेनानायकाय नमः। भविष्यच्चतुराननाय नमः। कुमारब्रह्मचारिणे नमः। रत्नकुण्डलदीप्तिमते नमः। सञ्चलद् वालसन्नद्धलम्बमानाय नमः। हनुमते नमः। मारुतात्मजाय नमः। महाबलपराक्रमाय नमः। कारागृहविमोक्त्रे नमः। शृङ्खलाबन्धमोचकाय नमः। सागरोत्तारकाय नमः। प्राज्ञाय नमः। रामदूताय नमः। प्रतापवते नमः। वानराय नमः। लक्ष्मिणीभञ्जकाय नमः। श्रीमते नमः। ४०

ओं सर्वमन्त्रस्वरूपिणे नमः। सर्वतन्त्रस्वरूपिणे नमः। गन्धमादनशैलस्थाय नमः। लङ्कापुरविदाहकाय नमः। सुग्रीवसचिवाय नमः। धीराय नमः। शूराय नमः। दैत्यकुलान्तकाय नमः। सुरार्चिताय नमः। महातेजसे नमः। प्रभवे नमः। बलसिद्धिकराय नमः। केसरीसुताय नमः। शिखोज्ज्वलाय नमः। सीताशोकनिवारकाय नमः।

अञ्जनागर्भसंम्भूताय नमः । गन्धर्वविद्यातत्त्वज्ञाय नमः । लक्ष्मणप्राणदात्रे नमः । वज्रकायाय नमः । महाद्युतये नमः । ६०

ओं चिरजीविने नमः । रामभक्ताय नमः । देत्यकार्यविघातकाय नमः । अक्षहन्त्रे नमः । काञ्चनाभाय नमः । पञ्चवक्त्राय नमः । महातपसे नमः । विजितेन्द्रियाय नमः । सिंहिकाप्राणभञ्जनाय नमः । महारावण-मर्दनाय नमः । स्फटिकाभाय नमः । वागधीशाय नमः । नवव्याकरण-पण्डिताय नमः । चतुर्बाह्वे नमः । दीनबन्धवे नमः । महात्मने नमः । भक्तवत्सलाय नमः । रामचूडामणिप्रदाय नमः । कामरूपिणे नमः । पिङ्गलाक्षाय नमः ।८०

ओं वार्धिमैनाकपूजिताय नमः । कबलीकृतमार्तण्डमण्डलाय नमः । बालार्कसदृशाननाय नमः । विभीषणप्रियकराय नमः । दशग्रीवकुलान्तकाय नमः । दान्ताय नमः । शान्ताय नमः । प्रसन्नात्मने नमः । शतकण्ठमदापहर्त्रे नमः । योगिने नमः । रामकथालोलाय नमः । सीतान्वेषणपण्डिताय नमः । वज्रदंष्ट्राय नमः। वज्रनखाय नमः । रुद्रवीर्यसमुद्भवाय नमः । सञ्जीवननगाहर्त्रे नमः । शुचये नमः । वाग्मिने नमः । दृढव्रताय नमः । कालनेमिप्रमथनाय नमः । १००

ओं हरिमर्कटमर्कटाय नमः । इन्द्रजित्प्रहितामोघब्रह्मास्त्रविनि-वारकाय नमः । पार्थध्वजाग्रसंवासिने नमः । शरपञ्जरभेदकाय नमः । लोकपूज्याय नमः । जाम्बवत्प्रीतिवर्धनाय नमः । मारुतये नमः । सीतासममेतश्रीरामपादसेवाधुरन्धराय नमः ।। (१०८)

धूपमाघ्रापयामि । दीपं दर्शयामि । धूपदीपानन्तरं आचमनीयं समर्पयामि । नैवेद्यम् समर्पयामि। मध्ये मध्ये पानीयं समर्पयामि । उत्तरापोशनं समर्पयामि । हस्तौ प्रक्षालयामि। पादौ प्रक्षालयामि।

शुद्धाचमनीयं समर्पयामि । नीराजनं समर्पयामि । नीराजनानन्तरं आचमनीयं समर्पयामि। सुवर्णदिव्यमन्त्रपुष्पं समर्पयामि। प्रदक्षिणनमस्कारान् समर्पयामि। श्रीहनुमद र्पणमस्तु ।

★ ★ ★

# श्रीहनुमद्व्रतम्

तत्राऽऽदौ हनुमद्व्रतं कर्त्तुमारभमाण आचारानुसारेण विशिष्टाचारपरम्पराप्राप्तां यथाशक्तिद्रव्यैः पम्पापूजां करिष्ये । इति संकल्प्य, मार्गशीर्षमासे शुक्लत्रयोदश्यां व्रतं करिष्यमाणः द्वादश्यामेव नियतो ब्रह्मचारी जितेन्द्रियः सम्यग् रात्रिं यापयित्वा ब्राह्मे मुहूर्ते उत्थाय कर्तव्यं सर्वमालोकयति ।।

शौनक उवाच-

हनुमद्व्रतसंकल्यं कर्त्तुकामोऽब्रवीज्जनः ।
कस्मिन्देशे व्रतं सम्यक्कर्त्तव्यं वद सूतज ।। १

किं च व्रतं पूर्वतरैः कुत्राचरितमद्भुतम् ।
सन्ति स्थलानि बहुधा गोष्ठवृन्दावनादयः ।। २

वापीकूपतडागाद्याः कुल्याः कृत्रिमविस्तृताः ।
नद्यो नदाः सागराद्याः पर्वताः सरितो द्रुमाः ।
विचार्य बहुधा तच्च वद नो वदतां वर ।। ३

सूत उवाच-
साधु पृष्टं महाभागाः सम्यगेवोच्यते मया ।
बहवः सन्ति देशाश्च पुण्याः पुण्यविवर्धनाः ।।

तथापि वक्ष्ये यद् गुह्यं तच्छृण्वन्तु मुनीश्वराः ॥ ४

पूर्वं हनुमतः पूजा कृता पम्पासरित्तटे ।
तस्मात् पम्पासरित्तीरे हनुमद्व्रतमुत्तमम् ॥ ५

नानादेशेषु कर्तव्या पम्पापूजा प्रयत्नतः ।
ब्राह्मे मुहुर्ते चोत्थाय शौचादिभिरतन्द्रितः ॥ ६

नित्यकर्म समाप्याशु योगक्षेमं समाविशेत् ।
ततश्च पंचभिर्वाधैरुपेतो बन्धुभिर्वृतः ॥ ७

तत्रत्यां च नदीं कांचिद्गत्वा स्नात्वा च वाग्यतः ।
अघमर्षणमंत्रैश्च शुचिः प्रयतमानसः ॥ ८

सन्ध्यावन्दनपूर्वं च नित्यकर्म समाप्य च ।
पितॄन् संतर्प्य यत्नेन ललाटे तिलकोज्ज्वलः ॥ ९

षोडशाप्युपचारांश्च पम्पायाः सर्वतो व्रती ॥ १०

पम्पा पूजा ॥
हेमकूट-गिरिप्रान्तजनानां गिरिसानुगाम् ।
पम्पामावाहयाम्यस्यां नद्यां हृद्यां प्रयत्नतः ॥ आवाहनम्

तरंगशतकल्लोलैः रिंगत्तामरसोज्ज्वले ।
पम्पानदि नमस्तुभ्यं गृहाणासनमुत्तमम् ॥ आसनम्

हृद्यं सुगन्धसंपन्नं शुद्धं शुद्धांबुसत्कृतम् ।
पाद्यं गृहाण पम्पाख्ये महानदि नमोऽस्तु ते ॥ पाद्यम्

भागीरथि नमस्तुभ्यं सलिलेन सुशोभने ।
अनर्घ्यमर्घ्यमनघे गृह्यतामिदमुत्तमम् ॥ अर्घ्यम्

पम्पानदि नमस्तुभ्यं महापुण्ये सुशोभने ।
गोदावरीजलेनाद्य गृहाणाचमनीयकम् ।। आचमनीयम्

दुग्धाज्येक्षुरसैः पुण्यैर्दध्ना च मधुना तथा ।
पञ्चामृतैः स्नापयिष्ये पम्पानदि नमोऽस्तु ते। पञ्चामृतस्नानम्

शुद्धक्षीरैः शुद्धजलैर्नारिकेलांबुभिस्तथा ।
पुण्यैः कृष्णानदीतोयैः सिंचामि त्वां सरिद्वरे ।। स्नानम्

महामूल्यं च कार्पासं दिव्यवस्त्रमनुत्तमम् ।
पम्पानदि महापुण्ये पम्पा शोभातिशोभने ।। वस्त्रम्

श्रौतस्मार्तादिसत्कर्मफलदं पावनं शुभम् ।
यज्ञोपवीतमधुना कल्पये सरिदुत्तमे ।। यज्ञोपवीतम्

कर्पूरगुटिकामिश्रं कस्तूर्या च विमर्दितम् ।
यत्नेन कल्पितं गन्धं लेपयेऽङ्गं सरिद्वरे ।। गन्धम्

लक्षणोक्तान्हरिद्राक्तानक्षतांश्चोत्तमाञ्छुभान् ।
पम्पानदि गृहाणेमाञ्छुभशोभातिवृद्धये ।। अक्षतान्

अतसीकुसुमोपेतं पंकेरुहदलोज्ज्वलम् ।
कुंकुमं शंकरजटासंभूते सरिदर्पये ।। कुंकुमम्

कज्जलं त्रिजगद्वन्द्ये महापुण्ये तरंगिणि ।
नेत्रयोः पादमनघं गृह्यतां सरितां वरे ।। नेत्राञ्जनम्

शतपत्रैश्च कह्लारैः कुमुदैर्वकुलैरपि ।
मल्लिकाजातिपुन्नागैः केवलैश्चापि चम्पकैः ।।

तुलसीदामभिश्चापि तथा बिल्वदलैरपि ।

पूजयामि महापुण्ये पम्पानदि नमोऽस्तु ते ।। पुष्पाणि

**अथ अङ्गपूजा ।।**

गोदावर्यै नमः पादौ पूजयामि । कृष्णायै नमः गुल्फौ पूजयामि। पापहारिण्यै नमः जंघे पूजयामि । सुभ्रुवे नमः जानुनी पूजयामि । उरुतरंगिण्यै नमः ऊरू पजयामि । तडिदुज्ज्वलजवायै नमः कटिं पूजयामि । अम्बुशोभिन्यै नमः नितम्बं पूजयामि । अणुमध्यायै नमः मध्यं पूजयामि । सुस्तनायै नमः स्तनौ पूजयामि । कम्बुकंठ्यै नमः कंठं पूजयामि। ललिताबाहुरंगायै नमः बाहू पूजयामि । दीर्घवेण्यै नमः वेणीं पूजयामि। सुवक्त्रायै नमः वक्त्रं पूजयामि । दुर्वारवारिपूरायै नमः शिरः पूजयामि । सहस्रमुखायै नमः सर्वांगं पूजयामि ।।

सदशांगं शुभं दिव्यं सगुग्गुलमनुत्तमम् ।
साज्यं परिमलोद्भूतं धूपं स्वीकुरु पावने ।। धूपम्

साज्यमग्निप्रकाशोद्यत्कोटिसूर्यसमद्युति ।
पश्य दीपं प्रसन्नांगे पम्पानदि नमोऽस्तु ते ।। दीपम्

शाल्यन्नं स्वर्णपात्रस्थं शाकापूपसमन्वितम् ।
साज्यं दधिपायसं च नैवेद्यं प्रतिगृह्यताम् ।। नैवेद्यम्

पूगैः सुशोभनैश्चापि नागवल्लीदलैर्युतम् ।
ताम्बूलं गृह्यतां देवि पम्पानदि नमोऽस्तु ते ।। ताम्बूलम्

व्रतपूर्तिमहाकीर्तिदिव्यस्फूर्तिप्रकीर्तिदम् ।
कर्तुकामो व्रतमिदं सौवर्णं पुष्पमर्पये ।। सुवर्णपुष्पम्

प्रदक्षिणत्रयं देवि प्रयत्नेन प्रकल्पितम् ।

पश्याद्य पावने देवि पम्पानदि नमोऽस्तु ते ।। प्रदक्षिणं

नमस्ते नमस्ते विशालोज्ज्वलांगे
नमस्ते नमस्ते लसत्सत्तरंगे।
नमस्ते नमस्ते गिरिप्रान्तरंगे
नमस्ते नमस्ते कलद्धर्हिरंगे ।। नमस्कारं

अपराधशतं देवि मत्कृतं च दिने दिने ।
क्षम्यतां पावने देवि पम्पानदि नमोऽस्तु ते।। क्षमापणम्

पम्पानदि महापुण्ये तरंगिणि ! नमोऽस्तु ते ।
त्वत्तीरे हनुमत्पूजा कृता रामेण धीमता ।।

मनोरथफलाऽवाप्तिस्तस्याभीष्टं न संशयः ।
सुग्रीवेण च तीरेऽस्मिन्कपिवर्येण ते कृतम् ।।

संस्कृतं च मनोवाञ्छा सहस्तस्य बभूव सा ।
अतस्त्वत्तीरपुलिने कृते हनुमतो व्रते ।।

श्रेयांसि मम सर्वाणि न विघ्नानि भवन्त्विह ।
इति सम्प्रार्थ्य पम्पाख्यां नदीं शुभतरंगिणीम् ।।
कलशोदकपाणिश्च गच्छेत् स्वगृहमादरात् ।।

इति पम्पापूजा ।।

देशकालौ स्मृत्वा, मयाऽऽचरितस्य व्रतस्य सम्पूर्णफलावाप्त्यर्थं भार्यया सह हनुमत्पूजां करिष्ये । इति संकल्प्य-

(पीठस्य अधोभागे) - अतलाय नमः । वितलाय नमः। सुतलाय नमः । रसातलाय नमः । तलातलाय नमः । महातलाय नमः ।पातालाय नमः । तत्र अगाधसर्वतःशब्दात्मने नमः। तत्र कमले कमठाय नमः ।

तदुपरि सहस्रमणिफणाप्रकाशमानशेषाय नमः। अष्टदिग्गजेभ्यो नमः। तदुपरि भूमण्डलाय नमः । तपोलोकाय । महर्लोकाय नमः । सत्यलोकाय। अष्टदिक्पालकेभ्यो नमः । तन्मध्ये मेरवे नमः। मेरोर्दक्षणदिग्भागे द्रोणशैलाय नमः । तन्मध्ये सुरतरवे नमः । तन्मूले सुवर्णवेदिकायै नमः। वेद्यां वृक्षस्य पूर्वभागे नवरत्नखचितचारुरत्नपीठाय नमः । (हनुमत् पीठे अलङ्कृतं कलशं निधाय) ॐ नमो भगवते वायुनन्दनाय नमः। इति कलशस्थापनम्।

ततः देशकालौ संकीर्त्य सीतासमेतश्रीरामचन्द्रध्यानादि मानसं कृत्वा श्री हनुमन्तमावाहयेत्। प्राणप्रतिष्ठां च विधिवत्कुर्यात्।।

द्वादशग्रन्थिपूजा- अञ्जनीसूनवे नमः प्रथमग्रन्थिं पूजयामि। हनुमते नमः द्वितीयग्रन्थिं पूजयामि। वायुपुत्राय नमः तृतीयग्रन्थिं पूजयामि। महाबलाय नमः चतुर्थग्रन्थिं पूजयामि। रामेष्टाय नमः पञ्चम ग्रन्थिं पूजयामि। फाल्गुनसखाय नमः षष्ठ ग्रन्थिं पूजयामि। पिंगाक्षाय सप्तम ग्रन्थिं पूजयामि। अमितविक्रमाय अष्टम ग्रन्थिं पूजयामि। कपीश्वराय नमः नवम ग्रन्थिं पूजयामिः। सीताशोकविनाशनाय नमः दशम ग्रन्थिं पूजयामि । लक्ष्मणप्राणदात्रे नमः एकादश ग्रन्थिं पूजयामि । दशग्रीवदर्पघ्राय नमः द्वादश ग्रन्थिं पूजयामि । भविष्यद्ब्रह्मणेनमः त्रयोदश ग्रन्थिं पूजयामि।

(अंग पूजा) हनुमते नमः पादौ पूजयामि। सुग्रीवसखाय नमः गुल्फौ पूजयामि। अंगदमित्राय नमः जंघे पूजयामि। रामदासाय नमः ऊरू पूजयामि । अक्षघ्नाय कटिं पूजयामि । लंकादहनाय नमः वालं पूजयामि । रामदासाय नमः नाभिं पूजयामि। सागरोल्लंघनाय नमः मध्यं पूजयामि। लंकामर्दनाय नमः केशावलिं पूजयामि। संजीवनीहर्त्रे

नमः स्तनौ पूजयामि । सौमित्रिप्राणदाय नमः वक्षः पूजयामि । कुण्ठितदशकण्ठाय नमः कण्ठं पूजयामि । रामाभिषेककारिणे नमः हस्तौ पूजयामि । मन्त्ररचितरामायणाय नमः वक्त्रं पूजयामि । प्रसन्नदवदनाय नमः वदनं पूजयामि । पिंगनेत्राय नमः नेत्रं पूजयामि । श्रुतिपारगाय नमः श्रुतिं पूजयामि । ऊर्ध्वपुण्ड्रधारिणे नमः कपोलं पूजयवामि । मणिकण्ठमालिने नमः शिरः पूजयामि । सर्वाभीष्टप्रदाय नमः सर्वांगं पूजयामि ।

दोर ग्रहणम्-

अंजनीगर्भसम्भूत रामकार्यार्थसम्भव ।

वरदातः कृता पूजा रक्ष मां प्रतिवत्सरम् ।

व्रतोद्यापनम् - यजमानो महानद्यां माध्याह्निकस्नानं कृत्वा, नित्यकर्म विधायाऽऽचार्य-ब्रह्मऋत्विग्भिः सहोपविश्य प्राणानायम्य, अद्य शुभतिथौ धर्मपत्नीसमेतस्य मम हनुमद्-व्रतकल्पोक्त-सम्पूर्णफला-वाप्तये धर्मार्थ-काम-मोक्ष-चतुर्विध-पुरुषार्थसिद्ध्यर्थं श्रीमदाञ्जनेय-प्रीत्यर्थं च हनुमद्व्रतोद्यापनाख्यं कर्म करिष्ये ।

अस्मिन् कर्मणि आचार्यत्वं भवन्तः कुर्वन्त्विति वेदवेत्तारं कुटुम्बिनं वित्तहीनं शान्तमाचारवन्तं ब्राह्मणमाचार्यत्वे नियोज्य, एवं लक्षणसहयुक्तमपरं ब्राह्मणं नियोज्य, ततः त्रयोदशकलशावाहनार्थं त्रयोदशब्राह्मणानृत्विग्विधौ नियोज्य एवमावरणं कृत्वा, ततो निष्कमात्रसुवर्णेन, तदर्धेन यथाशक्ति वा हनुमत्प्रतिमां कृत्वा प्राणानायम्य, हनुमद्-व्रतोद्यापनांगत्वेन पम्पापूजां कृत्वा, पुनः प्राणानायम्य, शुभतिथौ धर्मपत्नीसमेतस्य मम मनोवाञ्छाफलसिद्ध्यर्थं श्रीमदांजनेय-प्रीत्यर्थमांजनेयप्रतिमापूजां करिष्ये । इति संकल्प्य,

तत्प्रतिमाशुद्ध्यर्थं पंचामृतस्नपनं कृत्वा, मूलमन्त्रेण शुद्धोदकस्नपनं कृत्वा, पंचप्रस्थपरिमितश्वेततण्डुलोपरि अलंकृतपूर्णकलशं संस्थाप्य तदुपरि प्रतिमामाधाय प्राणप्रतिष्ठां कृत्वा. ततस्त्रयोदशकलशान् प्रतिमावेष्टितांस्तण्डुलेषु निधाय, कलशपूजां कृत्वा, तेषु कलशेषु वस्त्राण्यावेष्ट्य, तेषु नानाविधफलानि दत्वा, कलशपूजां कृत्वा, ततः पीठार्चनं कुर्यात् ॥ पीठस्याधस्तले अतलाय नमः। वितलाय नमः। सुतलाय नमः। रसातलाय नमः। तलातलाय नमः। महातलाय नमः। पातालाय नमः। तथागाधसर्वतोमुख-सुधाब्धिभ्यां नमः। तत्र कमठाय नमः। तदुपरि-सहस्रफणिफणामण्डित-मणिप्रकाशिताशेषलोकशेषाय नमः। अष्टदिग्गजेभ्यो नमः। तदुपरि भूमण्डलाय नमः। दिक्पालेभ्यो नमः। तन्मध्ये मेरवे नमः। मेरोर्दक्षिणदिग्भागे रत्नसानवे नमः। तन्मध्ये सुरतरवे नमः। तन्मूले सुवर्णवेदिकायै नमः। वेद्यां वृक्षस्य पूर्वभागे नवरत्नखचितनूतनपीठाय नमः। (एवं भावयित्वा)

स्वामिन्! सर्वजगन्नाथ! यावत् पूजावसानकम्।
तावत् त्वं प्रीतिभावेन प्रतिमायां स्थिरो भव ॥

ततस्त्रयोदशग्रन्थियुक्तदोरकं प्रतिष्ठाप्य, ध्यानम् -

वन्दे विद्युद्-वलयलसितं ब्रह्मसूत्रं दधानं,
कर्णद्वन्द्वे कनकवलये कुण्डले धारयन्तम्।
सत्कौपीनं कटिपरिहृतं कामरूपं कपीन्द्रं
नित्यं ध्यायाम्यनिलतनयं वज्रदेहं वरिष्ठम् ॥

प्रतप्त-जाम्बूनद-दिव्यमंसं देदीप्यमानाग्निविभासुराक्षम्।
प्रफुल्ल-पंकेरुह-शोभनास्यं ध्याये हृदिस्थं पवमानसूनुम् ॥

अथ कल्पोक्तप्रकारेण आवाहनादि - षोडशोपचारान् कृत्वा

नमःसर्वहितार्थाय जगदाराध्यकर्मणे।
अमेयायाञ्जनेयाय पुनरर्घ्यं पुरोऽर्पये।
इति प्रसन्नार्घ्यं समर्पयामि नमः।
भक्त्या प्रकल्पितैरेतैरुपचारैश्च षोडशैः।
भगवन् हनुमन्नीश! प्रीयतां मे प्रियोक्तिभिः॥

उपचारसमर्पणम् -

यस्य स्मृत्या च नामोक्त्या तपो यज्ञ क्रियादिषु।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्॥

एवं रात्रौ प्रथम-यामपूजां कृत्वा, तस्यां रात्र्यां प्रतियाम-पूजां कुर्वन्, गीतवादित्रादिभिर्मंगलध्वनिभिर्भागवत-पठनादि-पुराण-श्रवणादिभिर्जागरणं कृत्वा, परेद्युः प्रभाते महानद्यां ब्राह्मणैः सह स्नानं कृत्वा, नित्यकर्म विधाय गन्धादिभिरलंकृत्य, गृहमागत्य, पूर्ववत्पूजां कृत्वा, हनुमद्व्रतोद्यापनांगहोमं कुर्यात्। क्षीरान्नेनाज्येन पिप्पलसमिद्भिः कल्पोक्तद्रव्येण मूलमन्त्रेणाष्टोत्तरसहस्रमष्टोत्तरशतं वा होमं कुर्यात्। पूर्णाहुतिं दत्वा, ब्रह्मणे दक्षिणां दत्वा, तत आचार्यं पूजयित्वा, प्रतिमां सवस्त्रां सालंकारां सतण्डुलां च दत्वा, तद्दानसाद्गुण्यार्थं दक्षिणां दत्वा, आचार्याय सवत्सां सालंकारां पयस्विनीं गां दद्यात्।

तत ऋत्विग्भ्यः सवस्त्रान् कलशान् दत्त्वा दक्षिणां च दत्वा, विशिष्टपंगु-दीनान्धकृपणजनान् ब्राह्मणान् सन्तर्प्य, ऋत्विगादि-ब्राह्मणान् शतं पंचाशत्, पंचविंशतिं त्रयोदश वा ब्राह्मणान् मिष्टान्न-भोजनेन सन्तर्प्य, भूरिदानं विभवानुसारेण कुर्यात्। एवं कुर्वन् यजमानः

कृतार्थो भवति। हनुमान् सुप्रीतो वरदो भूत्वा पुत्रपौत्रादि सर्वकामान् प्रयच्छति। इति शौनकादिकान् प्रति सूतः प्रोवाच। इति ॥

* * *

# दीपदानम्

कवचमन्त्रपाठः- ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः फ्रें हनुमन् प्रकटपराक्रम आक्रान्तदिङ्मण्डल यशोधवलीकृतजगत्त्रितय वज्रदेह ज्वलत्सूर्यकोटिसमप्रभ तनुरुद्रावतार लंकापुरदहन उदधिलंघन दशग्रीवशिरःकृन्तन सीतात्रासनिवारक वायुसुत अंजनीगर्भसंभूत श्रीरामलक्ष्मणानन्दकर कपिसैन्यप्रकाश सुग्रीवसख्यकारण वालिनिबर्हण द्रोणपर्वतोत्पाटन अशोकवनविदारण अक्षकास्यच्छेदन वनरक्षाकार-समूहभंजन ब्रह्मशक्तिग्रसन लक्ष्मणशक्ति-भेदननिवारण शिशुसमानपीन-वालादित्यसानुग्रसन मेघनादहोम-विध्वंसन इन्द्रजिद्वधकारण सीता-रक्षक राक्षसविदारण कुम्भकर्णादिवधपरायण श्रीरामभक्तितत्पर व्योम-द्रुमोल्लंघन महासामर्थ्य महातेजःपुञ्जविराजमान स्वामिवचनसम्पादि-तार्जुन-संयुगसहाय। कुमार ब्रह्मचारिन् गम्भीरस्वर दक्षिणामार्तण्ड मेरुपर्वतोत्पाटकचरण सर्वदुष्टनिबर्हण व्याघ्रादिभयनिवारण सर्वशत्रु-च्छेदन मम त्रिभुवनस्त्रीपुंनपुंसकात्मकं सर्वजीवजातं वशयवशय। ममा-ज्ञाकारं सम्पादय नानानामधेयान् राज्ञः सपरिवारान् कुरु कुरु सर्ववश्य अविषाण अविषाण विध्वंसय विध्वंसय प्रबलानि परसैन्यानि क्षोभय क्षोभय सर्वकार्याणि साधय साधय सर्वदुर्जनानां मुखानि स्तम्भय कीलय घे घे घे हा हा हा हुं हुं हुं फट् स्वाहा ॥(दीपदानकाले जप्यमिदम्।)

आचम्य प्राणानायम्य देशकालौ स्मृत्वा मम इह जन्मनि जन्मान्तरे च अभीप्सितफलावाप्त्यर्थं श्री रामरूपिहनुमद्देवताप्रीत्यर्थं मंत्रसिद्ध्यर्थं

पंचपलैकतैलेन यथाशक्ति पंचपलमानताम्रपात्रेण एकविंशतितन्तुनिर्मिताभिस्त्रिभिर्वर्त्तिभिर्नित्यं दीपदानमहं करिष्ये इति संकल्प्य ॥

सुमुखश्चैकदन्तश्चेति पठित्वा पुण्याहं वाचयित्वा गणेशं संपूज्य गुरुचरणारविन्दं ध्यात्वा,

भक्त्या समागतोऽहं ते पादयोः भक्तवत्सल।
दीपकार्यं च भवता संपाद्यं वै नमो नमः ॥

इत्याज्ञां गृहीत्वा कपिलागोमयोपलिप्तभूमौ दीपयन्त्रं विलिख्य रक्तचन्दनरक्ततण्डुलैस्तद्यन्त्रं संपूर्य । यद्वा धातुनिर्मितयंत्रम् गोमयोपलिप्तभूमौ निधाय तन्मध्ये श्री रामरूपिहनुमद्दीप-यन्त्रराजाय नमः । (मूलं) दीपप्रियाय (त्रिरावृत्ति) नमः अग्नीशासुरवायव्येषु हृदयादि सम्पूज्य दिक्ष्वस्त्रं च सम्पूज्य

यन्त्रराजमहाराज हनुमत्प्रियकारक।
दीपं स्थापय मद्दत्तं मत्कामान्परिपूरय ॥

इति मंत्रराजं संप्रार्थ्य।

ॐ हौं रामदूताय विद्महे वायुपुत्राय धीमहि । तन्नो हनुमान् प्रचोदयात्। इति गायत्रीमन्त्रेण पात्रमभिमन्त्र्य तेनैव मूलपूर्वेण दीपपात्रं यन्त्रोपरि स्थापयेत् ॥

ॐ ह्रां ह्रीं ह्रूं हनुमन् एहि एहि मम सन्निधिं कुरु कुरु स्वाहा।

अनेन शुद्धतैलेन पूरयामि जगत्पते।
श्रीहनूमन् महावीर्य कार्यं साधय मे नमः ॥

इति मंत्रेण दीपपात्रं तैलेनापूर्य तत्र चतुरंगुलां सूक्ष्माग्रां स्थूलमूलां स्वर्णादिशलाकां दक्षिणतः क्षिप्त्वा

ॐ ह्रों हनुमन्वर्तिनं कल्पय कल्पय स्वाहा इति कन्याकरस्पर्शिते यथातन्तुनिर्मिते वर्तिके श्रीहनुमते इष्टान्मत्कामान्परिपूरयेति वर्तिकं दीपान्तरे निक्षिप्य

''ॐ ह्रौं हनुमन्संधुक्ष्व मम ईप्सितं सिद्ध्यतु स्वाहा।

श्रीहनुमन्महावीर्य योगज्वलितविग्रह।
भव सन्निहितो देव ज्वालारूपेण वर्तिषु।

ॐ ह्रां ह्रं ह्रूं श्रीहनुमन्मम समीहितमुद्दीपयोद्दीपय हुं फट् स्वाहा रामप्रियाय हनुमते वातात्मजाय। यथा दीपयते दीपं तथा कार्यं प्रदीपय। इति पठित्वा मूलपूर्वकं गायत्र्या प्रज्वाल्य मूलगायत्रीभ्यां त्रिधाभिमंत्र्य प्राणप्रतिष्ठां कुर्यात्॥

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हंसः सोहं दीपस्य प्राणा इह प्राणाः (पुनस्तान्युच्चार्य) दीपस्य जीव इह स्थितः। (पुनस्तान्युच्चार्य) दीपस्य सर्वेन्द्रियाणि। (पुनस्तान्युच्चार्य) दीपस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति त्रिः पठित्वा पुनस्तस्मिन्नेव हनुमत्प्राणप्रतिष्ठां कृत्वा पुनश्च अकारादि क्षकारान्तं मातृकया मूलेन गायत्र्या चाभिमंत्र्य गन्धादि दत्वा न्यासं कुर्यात्। मूलेन प्राणायामत्रयं कृत्वा,

ॐ अस्य श्री द्वादशवर्णात्मकहनुमन्मन्त्रस्य रामचन्द्र ऋषिः। जगती छन्दः। हनुमान् देवता। ह्सौं बीजं। हस्ख्फ्रें शक्तिः। ह्रौं कीलकम्। दीपपूजने विनियोगः॥ रामचन्द्रर्षये नमः शिरसि।

जगतीछन्दसे नमः मुखे। हनुमद्देवतायै नमः हृदि। ह्सौंबीजाय नमः गुह्ये। हस्ख्फ्रें शक्तये नमः पादयोः। ह्रौंकीलकाय नमः सर्वांगे। इति ऋष्यादिन्यासः। ह्रौं अंगुष्ठाभ्यां नमः। हस्फ्रें तर्जनीभ्यां नमः। ख्फ्रें मध्यमाभ्यां नमः ह्स्रौं अनामिकाभ्यां नमः। ह्स्ख्फ्रें कनिष्ठिकाभ्यां नमः। ह्सौः करतलकरपृष्ठाभ्यां नमः इति करन्यासः।

ह्रौं हृदयाय नमः। ह्स्फ्रें शिरसे स्वाहा। ख्फ्रें शिखायै वषट्। ह्स्रौं कवचाय हुं। ह्स्ख्फ्रें नेत्रत्रयाय वौषट्। ह्सौं अस्त्राय फट्। इति हृदयादि न्यासः। मूलेन सर्वाङ्गे।

अथांगन्यासः- ह्रौं नमः मूर्ध्नि। ह्स्फ्रें नमः भाले। ख्फ्रें नमः नेत्रयोः। ह्स्रौं नमः मुखे। ह्स्ख्फ्रें नमः कण्ठे। ह्सौः नमः हस्तद्वये। अक्षरन्यासः- हनुमते नमः जंघयोः। नमोनमः पादयोः। हं नमः हृदि। नुं नमः उदरे। मं नमः नाभौ। तें नमः लिंगे। नं नमः जान्वोः। मं नमः पादयोः। मूलेन व्यापकं विधाय। ध्यानम्।

अस्य श्री हनुमद्दीपदानमालांमत्रस्य रामचन्द्र ऋषिः। हनुमान् देवता। दीपप्रदाने प्रयोगसिद्धये जपे विनियोगः। रां रीं रूं रैं रौं रः इत्यनेन करषडंगन्यासौ कत्वा।

ॐ हनुमते नाथनाथाय अनन्तबाहवे सेतुबन्धनाय रामप्रियाय वायुपुत्राय अंजनीगर्भरत्नाय इमं दीपं गृहाण (२) रक्ष (२) दुष्टान्नाशाय (२) पातय (२) घातय (२)शत्रून् जहि (२) ॐ ह्रौं किलि (२) भुभुक्कारेण ॐ स्वाहा। मालामंन्त्रकार्यपरत्वेन योजयित्वा दीपदेवं मानसैरुपचारैः संपूज्य अद्य शुभपुण्यतिथौ मम निखिलोपद्रवशान्ति-पूर्वकंसकलाभीष्टसिद्ध्यर्थं श्रीरामरूपिहनुमद्देवताप्रीत्यर्थं पंच एकं वा यथाशक्ति तैलनिर्मितं पंचपलमितताम्रपात्रस्थितं नित्यदीपं श्री हनुमते

संप्रददे न मम इत्यादि द्वादशवर्णान् हनुमते अनाथनाथाय अनन्तबाहवे सेतुबंधनाय रामप्रियाय वायुपुत्राय अंजनीगर्भरत्नाय हूं हौं इमं दीपं गृहाण (२) मां रक्ष (२) दुष्टान् नाशय (२) पातय (२) घातय (२) शत्रून् जहि (२) ॐ ऐं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्स्फ्रें ख्फ्रें ह्स्रौं स्वाहा। अनेन दीपवर्येण पश्चिमाभिमुखेन मां रक्ष (२) मम वरप्रदानाय हूं (३) ह्रीं (३) क्लीं (३) स्वाहा । जलं भूमौ क्षिप्त्वा उदङ्मुखो भूत्वा करौ संपूटीकृत्य ॐ तं थं दं धं नं पं फं बं भं मं ॐ स्वाहा । सकृज्जपेत् । मूलमंत्रस्य पूर्वोक्तन्यासान् कुर्यात् ।।

* * *

# श्रीहनुमतः आवरणपूजा

जपः-

ॐ अस्य श्रीहनुमन्मन्त्रस्य श्रीरामचन्द्र ऋषिः । जगतीच्छन्दः । हनुमान् देवता, ह्रौं बीजं, ह्स्फ्रें शक्तिः, हनुमते कीलकम् । हनुमद्देवताजपे विनियोगः ।

न्यासाः- ऋष्यादिन्यासः । श्री रामचन्द्रऋषये नमः शिरसि। जगतीच्छन्दसे नमः मुखे। ह्रौं बीजाय नमः गुह्ये । हनुमते कीलकाय नमो नाभौ। विनियोगाय नमः अंजलौ ।।

करन्यासः (अंगन्यासः)- ॐ ह्रौं अंगुष्ठाभ्यां नमः (हृदयाय नमः)। ॐ ह्ख्फ्रें तर्जनीभ्यां नमः (शिरसे स्वाहा)। ॐ ह्ख्फ्रें मध्यमाभ्यां नमः (शिखायै वषट्)। ॐ ह्स्रौं अनामिकाभ्यां नमः (कवचाय हुं)। ॐ ह्स्फ्रें कनिष्ठिकाभ्यां नमः (नेत्रत्रयाय वौषट्)। ॐ ह्सौं करतलकरपृष्ठाभ्यां नमः (अस्त्राय फट्)।

मन्त्रवर्णविन्यासः

ॐ ह्रौं नमः मूर्ध्नि। ॐ ह्स्फ्रें नमः ललाटे। ॐ ख्फ्रें नमः नेत्रयोः। ॐ ह्स्रौं नमः मुखे। ॐ ह्स्ख्फ्रें नमः कण्ठे। ओं ह्सौं नमः बाहुमूले। ॐ हं नमः हृदि। ॐ नुं नमः कुक्ष्योः। ॐ मं नमः नाभौ। ॐ तें नमः लिंगे। ओं नं नमः जानुनि। ओं मः नमः पादयोः।

पदन्यासः

ॐ ह्रौं नमः मूर्ध्नि। ॐ ह्स्फ्रें नमः ललाटे। ॐ ख्फ्रें नमः मुखे। ॐ ह्स्रौं नमः हृदि। ॐ ह्स्खफ्रें नमः नाभौ। ॐ ह्सौं नमः ऊरौ। ॐ हनुमते नमः जानुनि। ॐ नमः पादयोः।

ध्यानम्

''बालार्कायुततेजसं त्रिभुवनप्रक्षोभकं सुन्दरं
सुग्रीवादि-समस्त-वानर गणैराराधितं साञ्जलिम्।
नादेनैव समस्तराक्षसगणान् संत्रासयन्तं प्रभुं
श्रीमद्रामपदाम्बुजस्मृतिरतं ध्यायामि वातात्मजम्॥''

अग्न्याधानम्-अग्नौ मारुतेरावाहनम्। प्राणप्रतिष्ठा।

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहम् अस्याः श्री हनुमत्प्रतिमायाः प्राणाः।

ॐ ओं आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं संः सोहम् अस्याः श्री हनुमत्प्रतिमायाः जीव इह स्थितः॥

ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहम् अस्याः श्री हनुमत् प्रतिमाया सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्र जिह्वा घ्राण पाणि पाद

पायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।।

गर्भाधानादि षोडशसंस्कारान्सम्पादयामि ।

आवाहनाद्युपचाराः

देवेश भक्तिसुलभ परिवारसमन्वित ।
यावत्त्वां पूजयिष्यामि तावद्देव इहावह ।
आगच्छ भगवन्देव स्थाने चात्र स्थितो भव ।
यावत्पूजां करिष्यामि तावत्त्वं सन्निधौ भव ।।

''ॐ भूर्भुवःसुवः श्रीहनुमद् देवतामावाहयामि'' ।

''तवेयं महिमा मूर्तिस्तस्यां त्वां सर्वग प्रभे ।
भक्तिस्नेहसमाकृष्ट दीपवत्स्थापयाम्यहम् ।।''

''ॐ भूर्भुवःसुवः श्रीहनुमद्देव इह तिष्ठ ।

''अनन्या तव देवेश मूर्तिशक्तिरियं प्रभो ।
सान्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्पर ।''

(मूलं ॐ भूर्भुवःसुवः श्रीहनुमद्देव इह सन्निधेहि ।

''आज्ञया तव देवेश कृपांभोधे गुणांबुधे ।।
आत्मानंदैकतृप्तं त्वां निरुणध्मि पितर्गुरो ।।''

(मूलं ॐ भूर्भुवःसुवः श्रीहनुमद्देव इह सन्निरुद्धो भव ।
''अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्यात्साधनस्य च ।।

यदपूर्णं भवेत्कृत्यं तदप्यभिमुखो भव ।।''

(मूलं ॐ भूर्भुवःसुवः श्री हनुमद्देव इह सम्मुखो भव ।।

'अभक्तवाङ्मनश्चक्षःश्रोत्रदूरातिगद्युते ॥
स्वतेजःपञ्जरेणाशु वेष्टितो भव सर्वतः ॥

(मूलं ॐ भुर्भूवःसुवः श्री हनुमद्देव अवगुंठितो भव ॥

''यस्य दर्शनमिच्छंति देवाः स्वाभीष्टसिद्धये ।
तस्मै ते परमेशाय स्वागतं च ब्रवीमि ते ॥''

(मूलं ॐ भूर्भुवःसुवः श्री हनुमद्देवाय नमः सुस्वागतं समर्पयामि।

''देव देव महाराजरामचन्द्र प्रियेश्वर ।
आसनं दिव्यमीशान दास्येऽहं परमेश्वर ॥

अपराधो भवत्येव सेवकस्य पदे पदे ॥
कोऽपरः सहतां लोके केवलं स्वामिनं विना ॥

(मूलं ॐ भूर्भुवःसुवः श्रीहनुमद्देवाय नमः । आसनं समर्पयामि।

स्वागतं देव देवेश मद्भाग्यात्त्वमिहागतः ।
प्राकृतं त्वं च दृष्ट्वा मां बालवत्परिपालय ॥

(मूलं ॐ भूर्भुवःसुवः श्री हनुमद्देवतायां प्रार्थनां समर्पयामि, नमस्करोमि ॥

पीठपूजा

''ओं मण्डूकादिपरतत्वांतपीठदेवताः स्थापयेत् ।

तथा च पुष्पकेसराक्षतं देवतायां अर्पयेत् । ॐ मं मंडूकाय नमः । ॐ कां कालाग्निरुद्राय नमः । ॐ आं आधारशक्त्यै नमः । ॐ कूंकूर्माय नमः । ॐ अं अनन्ताय नमः । ॐ पृं पृथिव्यै नमः । ॐ क्षीं क्षीरसागराय नमः । ॐ रं रत्नद्वीपाय नमः । ॐ रं रत्नमण्डपाय नमः । ॐ कं

कल्पवृक्षाय नमः । ॐ रं रत्नवेदिकायै नमः । ॐ रं रत्नसिंहासनाय नमः ।

(अग्निकोणे) - ॐ धं धर्माय नमः । नैरऋत्ये - ज्ञां ज्ञानाय नमः । (वायव्ये) ॐ वैं वैराग्याय नमः । (ईशाने) ॐ ऐं ऐश्वर्याय नमः । (पूर्वे) ॐ अं अधर्मायनमः (दक्षिणे) ओं अं अज्ञानाय नमः । (पश्चिमे) ॐ अं अवैराग्याय नमः । (उत्तरे) ॐ अं अनैश्वर्याय नमः । (मध्ये) ॐ संविन्नालाय नमः ।। ॐ सं सर्वतत्त्वकमलासनाय नमः । ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः । ॐ विं विकारमयकेसरेभ्यो नमः । ॐ पं पंचाशद्वर्णाढ्यकर्णिकाभ्यो नमः ।। ॐ अं अर्कमंडलाय द्वादशकलात्मने नमः । ॐ सों सोममंडलाय षोडशकलात्मने नमः । ॐ वं वह्निमण्डलाय दशकलात्मने नमः । ॐ सं सत्त्वाय नमः । ॐ रं रजसे नमः । ॐ तं तमसे नमः । ॐ आं आत्मने नमः । ॐ पं परमात्मने नमः । ॐ अं अन्तरात्मने नमः । ॐ ह्रीं ज्ञानात्मने नमः । ॐ मं मायातत्त्वाय नमः । ॐ कं कलातत्त्वाय नमः । ॐ विं विद्यातत्वाय नमः । ॐ पं परतत्त्वाय नमः । (एवं पीठदेवताः संपूज्य नवपीठशक्तीः पूजयेत्) (पूर्वे) ॐ विमलायै नमः ।। (आग्नेये) ॐ उत्कर्षिण्यै नमः । (दक्षिणे) ॐ ज्ञानायै नमः । (नैर्ऋत्ये) - ॐ क्रियायै नमः । (पश्चिमे) - ॐ योगायै नमः । (वायव्ये) ॐ प्रह्वायै नमः । (उत्तरे) - ओं सत्यायै नमः । (ऐशान्ये) ॐ सत्यायै नमः । (पीठमध्ये) - अनुग्रहायै नमः । इति पीठशक्तीः संपूज्य, देवाज्ञां गृहीत्वा आवरणपूजां कुर्यात् ।।

तत्र क्रमः ।।

पुष्पांजलिमादाय ''संविन्मयपरो देव परामृत रसप्रिय ।
अनुज्ञां देहि हनुमन् परिवारार्चनाय मे'' ।। (पुष्पाञ्जलिः)

षट्कोणयन्त्रपूजा

(षट्कोणेषु) ॐ ह्रौं हृदयाय नमः हृदयश्रीपादुकां पूजयामि तर्पयामि नमः। ॐ ह्स्फ्रें शिरसे स्वाहा। शिरःश्रीपादु ० पू ० तर्पयामि० नमः। ॐ ख्फ्रें शिखायै वषट् शिखाश्रीपा ० पू ० तर्पयामि नमः। ॐ ह्स्रौं कवचाय हुं कवचश्रीपा ० पू ० तर्पयामि नमः। ॐ ह्स्ख्फ्रें नेत्रत्रयाय वौषट् नेत्रत्रयश्रीपा ० पू ० त ० नमः।

अभीष्टसिद्धिं मे देहि शरणागतवत्सल। भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥ इति पुष्पाञ्जलिं दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्। (ततोऽष्टदले) पूज्यपूजकयोरंतरालं प्राची। तदनुसारेण अन्या दिशः प्रकल्प्य (दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गंधाक्षतपुष्पाणि गृहीत्वा, प्राच्यादिक्रमेण अष्टसु दिक्षु॥) प्राच्याम् ॐ रामभक्ताय नमः रामभक्तश्री पा ० पू ० तर्पयामि नमः। ॐ महाबलाय नमः महाबल श्री पा० पू० त० नमः। ॐ द्रोणाद्रिहारकाय नमः द्रोणाद्रिहारक श्री पा०पू० त० नमः। ॐ मेरुपीठकार्चनकारणाय नमः मेरुपीठकार्चनकारण श्री पा० पू० त० नमः॥ ॐ सर्व विघ्ननिवारकाय नमः सर्वविघ्ननिवारक श्री पा० पू० त० नमः॥

(ततः पुष्पांजलिमादाय मूलं पठित्वा विशेषार्घ्याद्बिन्दुं दत्वा, ''अभीष्टसिद्धिं मे देहि शरणागतवत्सल। पूजितास्तर्पिताः सन्तु इति वदेत्। ततः अष्टदलाद्बहिः चतुरश्राभ्यंतरे प्राच्याम्।)

ॐ सुग्रीवाय नमः सुग्रीवश्रीपादुकां पूजयामि तर्पयामि नमः। ॐ अंगदाय नमः अंगदश्रीपा० पू० त० नमः। ॐ नीलाय नमः नीलश्रीपा० पू० त० नमः। ॐ जाम्बवते नमः जाम्बवत्श्रीपा० पू० त० नमः। ॐ नलाय नमः नलश्री पा० पू० त० नमः। ॐ सुषेणाय नमः सुषेणश्रीपा०

पू० त० नमः। ॐ द्विविदाय नमः द्विविदश्रीपा० पू० त० नमः॥ ॐ मैन्दाय नमः मैन्दश्रीपा० पू० त० नमः। ततः पुष्पांजलिमादाय मूलं पठित्वा

''अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्॥

(इत्युक्त्वा पुष्पांजलिं दत्वा विशेषार्घ्याद्बिन्दुं दत्वा पूजितास्तर्पिताः सन्तु इति वदेत्॥)

(सन्धिषु पूर्वादिक्रमेण)

ॐ रक्षोघ्नाय नमः रक्षोघ्नश्रीपादुकां पूजयामि तर्पयामि नमः। ॐ विषघ्नाय नमः विषनाशकश्री पा० पू० त० नमः। ॐ रिपुघ्नाय नमः रिपुसंहारकश्री पा० पू० त० नमः। व्याधिघ्नाय नमः व्याधिघ्नश्रीपा पू० त० नमः। ओं चोरघ्नाय नमः चोरसंहारकश्रीपा० पू० त० नमः। ॐ भूतघ्नाय नमः भूतसंहारक श्री पा० पू० त० नमः। ॐ परशस्त्रास्त्र-मन्त्रघ्नाय नमः परशस्त्रपरमंत्रनिवारकश्रीपा० पू० त० नमः। ॐ भयनाशाय नमः भयनिवारकश्री पा० पू० त० नमः।

इति संपूज्य।

पुष्पाञ्जलिमादाय मूलमुच्चार्य-

''ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्।

इत्युक्त्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्॥

(भूपुराद्वहिः प्रथमपंक्तौ पूर्वादिक्रमेण ।।)

ॐ ऐरावताय नमः ऐरावतश्री पा० पू० त० नमः । ॐ पुण्डरीकाय नमः पुण्डरीकश्री पा० पू० त० नमः । ॐ वामनाय नमः वामनश्री पा० पू० त० नमः । ॐ कुमुदाय नमः कुमुदश्री पा० पू० त० नमः।। ॐ अञ्जनाय नमः अञ्जनश्रीपा० पू० त० नमः।। पुष्पदन्ताय नमः पुष्पदन्तश्री पा० पू० त० नमः । ॐ सार्वभौमाय नमः सार्वभौमश्री पा० पू० त० नमः ।। ॐ सुप्रतीकाय नमः सुप्रतीकश्री पा० पू० त० नमः ।।

ततः पुष्पांजलिमादाय मूलं पठित्वा-

''अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ।।''

इत्युक्त्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु वदेत् ।

भूपुरादिद्वितीयरेखायां पूर्वादिक्रमेण- पूर्वे ॐ लं इन्द्राय नमः । इन्द्रश्री पा०पू०त० नमः ।। ओं रं अग्नये नमः अग्निश्री पा० पू० त० नमः ।। ॐ मं यमाय नमः यमश्री पा० पू० त० नमः । ॐ क्षं निर्ऋतये नमः निर्ऋतिश्री पा० पू० त० नमः । ओं वं वरुणाय नमः वरुणश्रीपा पू० त० नमः । ॐ यं वायवे नमः वायुश्री पा० पू० त० नमः । ॐ कं कुबेराय नमः कुबेरश्री पा० पू० त० नमः । ॐ हं ईशानाय नमः ईशानश्री पा० पू० त० नमः । इन्द्रेशानयोर्मध्ये । ॐ आं ब्रह्मणे नमः ब्रह्मश्री पा० पू० त० नमः । ॐ ह्रीं अनन्ताय नमः अनन्तश्री पा० पू० त० नमः ।

इति दश दिक्पालान्संपूज्य पुष्पांजलिमादाय मूलमुच्चार्य ।

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं षष्ठमावरणार्चनम्॥

(इत्युक्त्वा पुष्पांजलिं च दत्त्वा, विशेषार्घ्याद्बिन्दुं निक्षिप्य ''पूजितास्तर्पिताः सन्तु'' इति वदेत्)

ततः पूर्वादिक्रमेण तत्तत्समीपे ॐ वं वज्राय नमः ॐ शं शक्तये नमः। ॐ दं दण्डाय नमः। ॐ खं खड्गाय नमः। ॐ पां पाशाय नमः। ॐ अं अंकुशाय नमः। ॐ गं गदायै नमः। ॐ त्रिं त्रिशूलाय नमः। ॐ पं पद्माय नमः। ॐ चं चक्राय नमः। इत्यस्त्राणि पूजयेत्॥

ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य
''ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम्॥

इत्युक्त्वा पुष्पांजलिं च दत्वा विशेषार्घ्याद्बिन्दुं निक्षिप्य पूजितास्तर्पिताः सन्तु इति वदेत्॥ इत्यावरणपूजा॥

उपचाराः-
''यद्भक्तिलेशसंपर्कात्परमानन्दसम्भवः।
तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये॥''
(मूलं) ''ॐ भुर्भुवःसुवः श्री हनुमते नमः पाद्यं समर्पयामि॥''

पापत्रयहरं दिव्यं परमानंदलक्षणम्।
तापत्रयविनिर्मुक्तं तवार्घ्यं कल्पयाम्यहम्॥

(मूलमन्त्रं पठित्वा)

ॐ भूर्भुवःसुवः श्रीहनुमते नमः इदमर्घ्यं समर्पयामि।
देवानामपि देवाय देवानां देवतात्मने॥''

आचामं कल्पयामीश शुद्धानां शुद्धिहेतवे ॥

(मूलमन्त्रं पठित्वा)ॐ भूर्भुवःसुवः श्रीहनुमते नमः आचमनीयं समर्पयामि ॥

मधुपर्कपञ्चामृतस्नानादि च सर्वं देवोपयोगिपद्धतिमार्गेण कुर्यात् ॥

अशक्तश्चेज्जलस्नानं मधुस्नानं शुद्धोदकस्नानं च कुर्यात् ॥

''गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः ।
स्नापितोऽसि मया देव तथा शांतिं कुरुष्व मे ॥

(मूलं पठित्वा) ॐ भूर्भुवःसुवः श्रीहनुमते नमः जलस्नानं समर्पयामि ॥''

तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ।
तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥

(मूलं पठित्वा) ॐ भूर्भुवःसुवः श्रीहनुमते नमः मधुस्नानं समर्पयामि ।

गंगा-सरस्वती-रेवा-पयोष्णी-नर्मदाजलैः।
स्नापितोऽसि मया देव तथा शान्तिं कुरुष्व मे ॥
(मूलं) ओं भूर्भुवःसुवः श्रीहनुमते नमः पुण्यतीर्थस्नानं समर्पयामि ॥

सर्वभूषादिकसमे लोकलज्जानिवारणे।
मयैवापादिते तुभ्यं वाससी प्रतिगृह्यताम् ॥
(मूलं) ॐ भूर्भुवःसुवः श्रीहनुमते नमः वस्त्रं समर्पयामि ॥

नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ।
उपवीतं चोत्तरीयं गृहाण परमेश्वर ॥

(मूलं) ॐ भूर्भुवःसुवः श्रीहनुमते नमः यज्ञोपवीतं उत्तरीयं च समर्पयामि ॥

श्रीखंडं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ।
विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥

(मूलं) ॐ भूर्भुवःसुवः श्रीहनुमते नमः चन्दनं समर्पयामि ।
अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभिताः ।
मया निवेदिता भक्त्या गृहाण परमेश्वर ।
(मूलं) ॐ भूर्भुवःसुवः श्रीहनुमते नमः अक्षतान्समर्पयामि ॥

''माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो ।
मयानीतानि पुष्पाणि गृहाण परमेश्वर ॥

(मूलं) ॐ भूर्भुवःसुवः श्रीहनुमते नमः पुष्पाणि समर्पयामि ॥

वनस्पतिरसोद्भूतो गंधाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

(मूलं) ॐ भूर्भुवःसुवः श्रीहनुमते नमः धूपं समर्पयामि ॥

''सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ।
सबाह्याभ्यंतरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥

(मूलं) ॐ भूर्भुवःसुवः श्रीहनुमते नमः दीपं समर्पयामि ॥
सत्पात्रसिद्धं सहविर्विविधं स्वादु भक्षणम् ।

निवेदयामि देवेश सानुगाय गृहाण तत् ॥
(मूलं) ॐ भूर्भुवःसुवः सांगाय सपरिवाराय श्रीहनुमते नमः नैवेद्यं समर्पयामि ॥

ब्रह्मेशाद्यैः सरसमभितः सूपविष्टैः समेतं
शिञ्जद्वाल-व्यजन-निकरैर्वीज्यमानो गणौघैः।
नर्मक्रीडा-प्रहसनपरो हासयन् पंक्तिभोक्तॄन्,
भुङ्क्ते पात्रे कनकघटिते षड्रसान् वायुपुत्रः।

नमस्ते देवदेवेश सर्वतृप्तिकरं परम्।
अखण्डानन्दपूर्णं गृहाण जलमुत्तमम्।

(मूलं) "ॐ भूर्भुवःसुवः श्रीहनुमते नमः जलं समर्पयामि।

अथ ध्यानम् -

बालार्कयुततेजसं त्रिभुवनप्रक्षोभकं सुन्दरं
सुग्रीवादि-समस्त-वानरगणैराराधितं सांजलिम्।
नादेनैव समस्तराक्षसगणान् संत्रासयन्तं प्रभुं
श्रीमद्रामपदाम्बुजस्मृतिरतं ध्यायामि वातात्मजम्॥

अद्येहेत्यादि मम (यजमानस्य) संकल्पोक्तफलावाप्तये श्री हनुमद्देवतापुरश्चरण सिद्धये, चतुर्दिक्षु वटुकादिदेवताभ्यो दधिमाषान्नद्रव्यैः पंचमहाभूतबलिदानं करिष्ये।

"ॐ वटुक बलिपात्राधारमण्डलाय नमः" "ॐ वँ वटुकबलि-द्रव्याय नमः" गन्ध पुष्पाभ्यां नमः। (पूर्वे) वँ वटुकाय नमः, ॐ ऐं ह्रीं श्रीं एह्येहि देवीपुत्र वटुकनाथ जटाभारभास्वर त्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय नाशय सर्वोपचारसहितं इमं बलिं गृहाण गृहाण स्वाहा॥

प्रार्थना-

ॐ करकलितकपालःकुण्डलीदण्डपाणिः
तरुणतिमिरनील व्यालयज्ञोपवीती।

ऋतुसमयसपर्याविघ्नविच्छेदहेतुः
जयति वटुकनाथः सिद्धिदः साधकानाम्।।

बलिदानेन सन्तुष्टो वटुकः सर्वसिद्धिदः।
शान्तिं करोतु मे नित्यं भूतवेतालसेवितः।।

(पुष्पांजलिं कुर्यात्)

(उत्तरे) ॐ गं गणपतये नमः गणेशबलिपात्राधारमण्डलाय नमः। (तत्पश्चात्) - ॐ गणेशबलिद्रव्याय नमः। ॐ गां गीं गूं गैं गौं गः गणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचारसहितं बलिं गृह्ण-गृह्ण स्वाहा।

सर्वदा सर्वकार्याणि निर्विघ्नं साधयेन्मम।

शान्तिं करोतु सततं विघ्नराजः सशक्तिकः।

(उत्तरस्यां) ''योगिनीबलिपात्राधारमण्डलाय नमः'' ''ॐ यां योगिनीबलिद्रव्याय नमः'' दक्षिणे यां सर्वयोगिनीभ्यो नमः। ॐ सर्ववर्णयोगिन्यः इमं बलिं गृह्णन्तु गृह्णन्तु हुं फट् स्वाहा।

ॐ ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वा स्थले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा।
क्षेत्रे पीठोपपीठे दिशि च कृते धूपदीपादिकेभ्यः
प्रीता देव्यः सदा नः शुभविधिबलिनः पांतु वीरेन्द्रवन्द्याः।।

या काचिद्योगिनी रौद्रा सौम्या घोरा परात्परा।
खेचरी भूचरी व्योमवत्यः प्रीतास्तु मे सदा।।
यां योगिनीभ्यः स्वाहा सर्वाभ्यो योगिनीभ्यः फट्।। (पुष्पांजलिः)

(पश्चिमायां) ''क्षेत्रपालबलिपात्राधारमण्डलाय नमः ।। ''ॐ क्षं क्षेत्रपालबलिद्रव्याय नमः '' ''पश्चिमे क्षं क्षेत्रपालाय नमः ।। क्षां क्षीं क्षूं क्षैं क्षौं क्षः भो स्थानक्षेत्रपाल इमं बलिं गृहाण सर्वकार्याणि पूरय पूरय स्वाहा ।।''

योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालः सकिंकरः ।
प्रीतोऽयं बलिदानेन सर्वरक्षां करोतु मे ।।

''ह्रीं सर्वभूतविघ्नकृद्बलिपात्राधारमण्डलाय नमः ।'' ''सर्वभूत-विघ्नकृद्बलिद्रव्याय नमः।'' ''ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यः इमं बलिं गृह्णन्तु गृह्णन्तु हुं फट् स्वाहा ।।

भूता ये विघ्नकर्तारः दिवि भूम्यन्तरिक्षगाः।
पातालस्थलसंस्थाश्च शिवयोगेन भाविताः ।
क्रूराद्याः शतसंख्याकाः पाखण्डाद्या व्यवस्थिताः ।
ध्रुवाद्याः सत्यसंख्याश्च इन्द्राद्याशाव्यवस्थिताः ।
तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ।
नगरे वाथ संग्रामे अटव्यां वै सरित्तटे ।।
वापीकूपेषु वृक्षेषु श्मशाने च चतुष्पथे ।
नानारूपधरा ये च बहुरूपधराश्च ये ।
ते सर्वे चैव सन्तुष्टा बलिं गृह्णन्तु मे सदा ।।

श्री द्वादशाक्षरहनुमन्मन्त्रस्य श्री रामचन्द्रस्य ऋषेः बलिपात्राधार-मण्डलाय नमः (मूलं मन्त्रमुच्चार्य) ''श्री रामचन्द्रऋषये इमं बलिं गृहाण गृहाण स्वाहा ।।''

(मूलमंत्रं पठित्वा) ''ओं (मूलं) हनुमद्देवताबलिद्रव्याय नमः'' ''ॐ (मूलं) सांगायै सायुधायै सवाहनायै सपरिवारायै सशक्तिकायै श्री

हनुमद्देवतायै नमः । ॐ (मूलं) चण्डेश्वराय नमः धूं फट् चण्डेश्वराय इमं बलिं गृहाण गृहाण स्वाहा ॥''

चण्डेश्वरं रक्ततनुं त्रिनेत्रं रक्तांशुकाढ्यं हृदि भावयामि ।

टंकं त्रिशूलं स्फटिकाक्षमालां कमण्डलुं बिभ्रतमिन्दुचूडम् ॥

ॐ ह्रीं नमः इति सेतुमंत्रं जप्त्वा (१०८) मूलमंत्रं यथाशक्ति जपेत्)

''कदलीगर्भसंभूतं कर्पूरं च प्रदीपितम् ।
आरात्रिकमहं कुर्वे पश्य मे वरदो भव ॥''

(मूलं) ''ॐ भूर्भुवःसुवः श्रीहनुमते नमः कर्पूरारात्रिकं समर्पयामि ।

यानि कानि च पापानि जन्मान्तरकृतानि वै ।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे ॥

ॐ भूर्भुवःसुवः श्रीहनुमते नमः प्रदक्षिणं समर्पयामि ॥

''नानासुगंधपुष्पाणि यथाकालोद्भवानि च ।
पुष्पाजलिं मया दत्तं गृहाण परमेश्वर ॥

ॐ भूर्भुवःसुवः श्रीहनुमते नमः । पुष्पांजलिं समर्पयामि ॥

यदुक्तं हृदि भावेन पत्रं पुष्पं फलं जलम् ।
निवेदितं च नैवेद्यं गृहाण त्वनुकंपया ॥

''अनया कृतया पूजया श्री हनुमद्देवता प्रीयतां इदं न मम ।''

परिवारपूजा -ॐ भुर्भुवःसुवः श्रीरामचन्द्रऋषये स्वाहा । ॐ भुर्भुवःसुवः ह्रौं स्वाहा । ॐ भुर्भुवःसुवः ह्स्फ्रें स्वाहा । ॐ भुर्भुवःसुवः ख्फ्रें स्वाहा । ॐ भुर्भुवःसुवः ह्स्रौं स्वाहा । ॐ भुर्भुवःसुवः ह्स्ख्फ्रें स्वाहा । ॐ भुर्भुवःसुवः ह्सौं स्वाहा । ॐ भुर्भुवः सुवः रामभक्ताय

स्वाहा। ॐ भुर्भुवः सुवः महातेजसे स्वाहा। ॐ भुर्भुवःसुवः कपिराजाय स्वाहा। ॐ भुर्भुवःसुवः महाबलाय स्वाहा। ॐ भुर्भुवःसुवः द्रोणाद्रि-हारकाय स्वाहा। ॐ भुर्भुवःसुवः मेरुपीठकार्चनकारकाय स्वाहा। ॐ भुर्भुवःसुवः दक्षिणाशाभास्कराय स्वाहा। ॐ भुर्भुवःसुवः सर्वविघ्न-निवारकाय स्वाहा। ॐ भुर्भुवः सुवः सुग्रीवाय स्वाहा। ॐ भुर्भुवःसुवः अंगदाय स्वाहा। ॐ भुर्भुवःसुवःनीलाय स्वाहा। ॐ भुर्भुवःसुवः जाम्बवते स्वाहा। ॐ भुर्भुवःसुवः नलाय स्वाहा। ॐ भुर्भुवःसुवः सुषेणाय स्वाहा। ओं भूर्भुवः सुवः - द्विविदाय स्वाहा। ओं भूभुवः सुवः। मैन्दाय स्वाहा॥ ओं तत्सद्ब्रह्मार्पणमस्तु।

* * *

# हनुमन्मन्त्राः

(प्रपञ्चसारसारसंग्रहतः)

१. हनुमन्मन्त्रस्य ईश्वरः ऋषिः, अनुष्टुप् छन्दः, हनुमान् देवता। हां बीजं, नमः शक्तिः, मं कीलकं; मम हनुमत्प्रीत्यर्थे जपे विनियोगः। ओं नमो भगवते आञ्जनेयाय हृदयाय नमः। रुद्रमूर्तये शिरसे स्वाहा। वायुसुताय शिखायै वषट्। अग्निगर्भाय कवचायहुं। रामदूताय नेत्रत्रयाय वौषट्। ब्रह्मास्त्र निवारणाय अस्त्राय फट्। एतैरेव करन्यासः। ध्यानं-

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम्।
कुण्डलद्वयसंशोभिमुखांभोजं मुहुर्भजे॥

हौ ओं नमो भगवन् प्रकटपराक्रम आक्रान्तदिङ्मण्डल यशोवितान-धवलीकृतजगत्त्रितय वज्रदेह रुद्रावतार लंकापुरीदहन उदधिबन्धन (लङ्घन) दशग्रीवकृतान्तक, सीताश्वासन, अञ्जनागर्भसंभव

रामलक्ष्मणा- नन्दकर कपिसैन्यप्राकारक सुग्रीवधारण पर्वतोत्पाटन बालब्रह्मचारिन् गंभीरशब्द सर्वग्रहविनाशन सर्वज्वरोत्सादन डाकिनीविध्वंसिन् ओं ह्रीं हा हा हा हंस हंस एहि सर्वविषं हर हर परबलं क्षोभय क्षोभय मम सर्वकार्याणि साधय साधय हुं फट् स्वाहा।

२. अस्य श्रीहनुमन्मन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः हनुमान् देवता हां बीजं ह्रीं शक्तिः, हनुमत्प्रीत्यर्थे जपे विनियोगः। ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति अंगन्यासकरन्यासौ। ध्यानम् -

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम्।
पारिजात तरुमूलवासिनं भावयामि पवमाननन्दनम्॥

औं नमो भगवते मम मदनक्षोभं संहर संहर आत्मतत्त्वं प्रकाशय प्रकाशय हुंफट् स्वाहा। (मन्त्रोऽयं विद्याप्रदः)

३. कशिं कुक्ष वरवर अञ्जनावरपुत्र आवेशि

आवेशि (आवेशयावेशय) ओं ह्रीं हनुमन् फट्।

ऋष्यदिन्यासाः पूर्ववत्। पिशाचादि निवृत्तिःफलम्।

४. वसिष्ठऋषिः अनुष्टुप्छन्दः। हनुमान् देवता।

ओं नमो हनुमते - मम मदनक्षोभं - संहर संहर आत्मतत्वं प्रकाशय प्रकाशय हुंफट् स्वाहा इति अंगन्यासकरन्यासौ। ध्यानम्

वामे जानुनि वामबाहुमपरं ज्ञानाख्यमुद्रायुतं
हृद्देशे कलयन् वृतो मुनिगणैरध्यात्मदत्तेक्षणः।
आसीनः कदलीवने मणिमये बालार्ककोटिप्रभः
ध्यायन्ब्रह्म परं करोतु मनसः सिद्धिं (शुद्धिं) हनूमान्मम॥

ओं नमो हनुमते मम मदनक्षोभं संहर संहर आत्मतत्त्वं प्रकाशय प्रकाशय हुं फट् स्वाहा। (मदनक्षोभशान्तिविद्याप्रधानोऽयं मन्त्रः।

शीर्षालिक श्रवणनेत्रकपोलनासा
दोःपादसन्धिकटिनाभिसपार्श्वहृत्सु।
कण्ठांसयुग्म मुखमूर्धसु च क्रमेण
मन्त्राक्षराण्यसतु शुद्धमतिः स्वदेहे॥ (इति न्यासक्रमः)

लक्षं जपेत्। कदलीफलैर्वा पनसफलैर्वा; स्वादु (मधु) प्लुतैः दशांशं पुरश्चरणहोमः।

पूजाक्रमः- नवशक्तिसहिते सामान्यपीठे आवाह्य अङ्गैः प्रथमावृतिः, जाम्बवते - विनताय - नीलाय - पनसाय - गन्धमादनाय - सुषेणाय - मैन्दाय- द्विविदाय - इति द्वितीयावृतिः। लोकेशैः (दिक्पालैः) तृतीया। तदायुधैः चतुर्थी। यन्त्रं तु-

कर्णिकायां लिखेत्तारं साध्यगर्भं च तद्बहिः।
अष्टपत्रे केसरोद्यत्स्वरद्वन्द्वे मनोः क्रमात्॥

आद्ये सप्त द्वितीये च चतुरोऽर्णास्तृतीयके।
सप्त तुर्ये पञ्चमे च त्रीणि त्रीण्यक्षराण्यपि॥

षट्सप्तमाष्टपत्रेषु चतुरश्चतुरश्चतुरोऽक्षरान्।
वृत्तोल्लसत्कादिवर्णं भूपुराश्रस्थतारकम्॥
हनूमतो यन्त्रमेतत् वाञ्छितार्थप्रदं परम्।

इदमेव विलिख्य साधु यन्त्रं नवनीते प्रतिजप्य मन्त्रमेनम्।
परिभक्षयतामनङ्गपीडा प्रशमं गच्छति शुद्धिमेति चेतः॥

द्वितीयः प्रयोगः -

आदाय दोष्णा सलिलं प्रसन्नं प्रजप्य मन्त्रं प्रपिबेत् त्रिवारम्।
रागादिदोषप्रशमाय बुद्धेर्ज्ञानोदयाय प्रशमाय वृत्तेः ॥

* * *

# पुरश्चर्यार्णवतो हनुमन्मन्त्राः

अष्टादशाक्षरो मन्त्रः

अथान्यं संप्रवक्ष्यामि मन्त्रमष्टादशाक्षरम्।
नमो भगवते प्रोच्य आञ्जनेयाय संवदेत्॥
महाबलाय स्वाहेति मुनिरस्येश्वरः स्मृतः। १

(नमो भगवते आञ्जनेयाय महाबलाय स्वाहा)
छन्दोऽनुष्टुब् देवता तु हनुमान् हँ च बीजकम्॥ २

स्वाहा शक्तिश्चाञ्जनेयो रुद्रमूर्तिर्मरुत्सुतः।
अग्निगर्भो रामदूतो ब्रह्मास्त्रविनिवारकः।

एतैर्ङेऽन्तैः षडङ्गानि तथाऽङ्गुष्ठादिषु न्यसेत्॥ ३

तप्तकाञ्चनसङ्काशं हृदये निहिताञ्जलिम्।
किरीटिनं कुण्डलिनं ध्यायेद्वानरनायकम्॥ ४

अयुतं प्रजपेन्मन्त्रं दशांशं जुहुयात्तिलैः।
विप्रसन्तर्पणाद्यं तु प्राग्वत् सिद्धौ भवेन्मनुः॥ ५

जितेन्द्रियो नक्तभोजी प्रत्येकं साष्टकं शतम्।
जपित्वा क्षुद्ररोगेभ्यो मुच्यते दिवसत्रयात्।

भूतप्रेतपिशाचादिनाशायैवं समाचरेत् ॥ ६

महारोगनिवृत्त्यै तु सहस्रं त्रिदिनं जपेत् ।
यताशनोऽयुतं नित्यं जपेद्ध्यायन् कपीश्वरम् ।
राक्षसौघं विनिघ्नन्तमचिराज्जयति द्विषः ॥ ७

सुग्रीवेण समं रामं संदधानं स्मरन् कपिम् ।
प्रजप्यायुतमात्रं तु सन्धिं कुर्याद्विरुद्धयोः ॥ ८

लङ्कां दहन्तं तं ध्यायन्नयुतं प्रजपेन्मनुम् ।
शत्रूणां प्रदहेद् ग्रामानचिरादेव साधकः ॥ ९

प्रयाणसमये ध्यायन् हनुमन्तं मनुं जपेत् ।
यो याति सोऽचिरात् स्वेष्टं साधयित्वा गृहं व्रजेत् ॥ १०

यः कपीशं सदा गेहे पूजयेज्जपतत्परः ।
आयुर्लक्ष्म्यौ प्रवर्धेते तस्य नश्यन्त्युपद्रवाः ॥ ११

शार्दूलतस्करादिभ्यो रक्षेन्मनुरयं स्मृतः ।
प्रस्थानकाले चौरेभ्यो दुष्टसर्पादपि ध्रुवम् ॥ १२

पुच्छाकारे सुवसने लेखिन्या कोकिलोत्थया ।
अष्टगन्धैर्लिखेद्रूपं कपिराजस्य सुन्दरम् ॥ १३

तन्मध्येऽष्टादशार्णं तु शत्रूणामयुतं लिखेत् ।
तेन मन्त्राभिजप्तेन शिरोबन्धेन भूमिपः ।
जयत्यरिगणं सर्वं दर्शनादेव निश्चितम् ॥ १४

**अष्टाक्षरो मन्त्रः-**

अथान्यं संप्रवक्ष्यामि मन्त्रमष्टाक्षरं परम् ।
षड्दीर्घयुक्ता हृल्लेखा प्रणवेन च सम्पुटा ॥ १५

अष्टार्णोऽयं हनुमतो मन्त्रराजः प्रकीर्तितः ।
षड्दीर्घयुक्तबीजेन षडङ्गविधिरीरितः ।। १६

ओं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ह्रीं ओं

बालार्काभं त्रिभुवनं क्षोभकान् सर्वराक्षसान् ।
नादेनैव त्रासयन्तं सुग्रीवादिकसेवितम् ।
सुन्दरं रामचरणध्यानं ध्यायेत्समीरजम् ।। १७

**द्वादशाक्षरो मन्त्रः**

अथास्यायं प्रवक्ष्यामि द्वादशार्णं महामनुम् ।
हौं बीजं सम्यगुच्चार्य पूर्वोक्तं कूटपञ्चकम् ।। १८

हनुमते नमो मन्त्रो रामचन्द्रो मुनिर्मतः ।
जगतीछन्द उद्दिष्टं हनुमान्देवता मतः ।। १९

बीजं तु पञ्चमं कूटं शक्तिराद्यं कूटकम् ।
षड्बीजैः प्रथमैर्न्यासः षडङ्गोऽस्य प्रकीर्तितः ।। २०

आद्यन्ताकृतिवेदार्णा बिन्दुरुद्रस्वरान्विताः ।
हनूमतस्त्वाद्यकूटमेतत्साधक उच्चरेत् ।। २१

प्रकृत्याकृतिवेदार्णा बिन्दुरुद्रस्वरान्विताः ।
द्वितीयं कूटमेतत्स्यादाद्यन्ताकृतिवर्णकाः ।। २२

विसर्गेन्दुस्वरोपेतास्तृतीयं कूटमुच्यते ।
आद्यन्तसिद्धाकृत्यब्धिवर्णैरीशस्वरान्वितैः ।। २३

सानुस्वारैस्तुर्यकूटं साद्यः सौः पञ्चमं मतम् ।
(हौं ह्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें सः ह्सौं हनुमते नमः)

ध्यानं पूर्वोक्तमेवास्य जपेदर्कसहस्रकम्।
दशांशं जुहुयाद् व्रीहीन् पयोदध्याज्यसंयुतान्।। २४

**मालामन्त्रः-**

अथातः संप्रवक्ष्यामि मालामन्त्रं वदेद् ध्रुवम्।
वज्रकाय वज्रतुण्ड वदेत् कपिलपिङ्गल।। २५

ऊर्ध्वकेश महाबलेति रक्तमुख कीर्तयेत्।
तडिज्जिह्व महारौद्र दंष्ट्रोत्कटक हद्वयम्।। २६

करालिने महा प्रोच्य दृढप्रति च हा वदेत्।
हि लङ्केश्वर वेत्युक्त्वा धाय महा वदेत्परम्।। २७

सेतुबन्धमहाशैलप्रवाह गगनेचर।
एह्येहि भगवन् प्रोच्य महाबल पराक्रम।। २८

भैरवाज्ञापय प्रोच्य एह्येहीति पदं वदेत्।
महारौद्रपदं प्रोच्य दीर्घपुच्छेन वेष्टय।। २९

वैरिणं भञ्जय द्वन्द्वं हूँ फड्बाणार्कवर्णवान्।
मुन्याद्यर्चाप्रयोगादिसर्वं सूर्यार्णवन्मतम्।। ३०

**अन्यो मन्त्रः-**

नमः सबिन्दुमृद्धत्य हनुमन्तं च ङेऽन्तकम्।
रुद्रात्मकाय कवचमस्त्रं चेत्येकवर्णकः।। ३१

मन्त्रोऽयं हरिणा पूर्वं दत्तो गाण्डीवधन्विने।
एतस्य साधनं कृत्वा रणे विजयमाप्तवान्।। ३२

**अन्यो मन्त्रः -**

स्वबीजं पूर्वमुच्चार्य ङेऽन्तं पवननन्दनम्।
वह्निजायावधि प्रोक्तो मन्त्रोऽयं सुरपादपः ॥ ३३

षड्दीर्घभाजा बीजेन मन्त्रार्णैरङ्गकल्पना।
स्वरैः काद्यैश्च प्राणायामत्रयं चरेत्॥ ३४

ओं ह्रं पवननन्दनाय स्वाहा।
ध्यायेद्रणे हनूमन्तं कपिकोटिसमन्वितम्।
धावन्तं रावणं जेतुं दृष्ट्वा सत्वरमुत्थितम्॥ ३५

लक्ष्मणं च महावीरं पतितं रणभूतले।
गुरुक्रोधं समुत्पाद्य गृहीत्वा गुरुपर्वतम्॥ ३६

हाहाकारैः सदर्पैश्च कम्पयन्तं जगत्त्रयम्।
आब्रह्म च समाव्याप्य कृत्वा भीमकलेवरम्॥ ३७

पूजा तु वैष्णवे पीठे लक्षमेकं जपं चरेत्।
ततः सिद्धमनुर्मन्त्री साधयेत्सिद्धिमुत्तमाम्॥ ३८

ब्राह्मे मुहूर्ते चोत्थाय कृतनित्यक्रियो द्विजः।
गत्वा नदीं ततः स्नात्वा तीर्थमावाह्य चाष्टधा ॥ ३९

मूलमन्त्रं ततो जप्त्वा सिञ्चेदादित्यसंख्यया। (१२)
संपूज्य हनूमन्तं षट्सहस्रं जपमाचरेत्॥ ४०

एवं सप्तदिनान्ते च समायाति कपीश्वरः।
रात्रौ त्रिभागशेषायां ददाति वरमीप्सितम्॥ ४१

विद्यां वाऽपि धनं वापि राज्यं वा शत्रुनिग्रहम्।
ददाति साधकेन्द्राय सत्यं सत्यं सुनिश्चयम्॥ ४२

* * *

# हनुमन्मन्त्रप्रयोगविधिः

(मन्त्रमहोदधितः)

अथोच्यन्ते हनुमतो मन्त्राःसर्वेष्टसिद्धये।
इन्द्रस्वरेन्दुसंयुक्तो वराहोहसफाग्रयः॥ १

हौं ह् स् फ् र् एं = ह्स्फ्रें

झिण्टीशबिन्दुसंयुक्ताद्धितीयं बीजमीरितम्।

गदी (ख) पान्ताग्निरुद्रेन्दुसंयुतः स्यात्तृतीयकम्॥ २

(ख्, फ्, र्, एं= ख्फ्रें)

हसरासमुचन्द्रेढ्याश्चतुर्थंहसखाःफराः। (ह् स् र् ओं = ह्स्रौं) (ह् स् ख् फ् र् एं= ह्स्ख्फ्रें)

शिवेन्द्वाढ्याःपञ्चमः स्याद्धसौमबिन्दुगौपरम्॥ ३ (ह् स् = ह्सौं)

ङेयुतो हनुमान्हार्दं (नमः) मन्त्रोऽयं द्वादशाक्षरः

१. हौं हृदयाय नमः २. ह्स्फ्रें शिरसे स्वाहा। ३. ख्फ्रें शिखायै वषट्। ४. ह्स्रौं कवचाय हुं। ५. ह्स्ख्फ्रें नेत्रत्रयाय वौषट्। ह्सैं अस्त्राय फट् हनुमते नमः॥

रामचन्द्रो मुनिश्चास्य जगतीछन्द ईरितम्॥ ४

हनुमान्देवता बीजं षष्ठं शक्तिर्द्वितीयकम्।
षड्बीजैरङ्गषट्कं स्यान्मूर्ध्नि भाले दृशोर्मुखे ॥ ५

कण्ठे च बाहुद्वितये हृदि कुक्षौ च नाभितः।
लिङ्गे जानुद्वये चैव मन्त्रवर्णान्क्रमान्न्यसेत् ॥ ६

षड्बीजानि पदद्वन्द्वे भाले चैव मुखे हृदि।
नाभावूर्वोर्जङ्घयोश्च पादयोर्विन्यसेत्क्रमात् ॥ ७

बालार्कायुततेजसं त्रिभुवनप्रक्षोभकं सुन्दरम्
सुग्रीवादिसमस्तवानरगणैः संसेव्यपादाम्बुजम्।
नादेनैव समस्तराक्षसगणान्संत्रासयन्तं प्रभुं
श्रीमद्रामपदाम्बुजस्मृतिरतं ध्यायामि वातात्मजम् ॥ ८

एवं ध्यात्वा जपेदर्कसहस्रं जितमानसः।
दशांशं जुहुयाद् व्रीहीन्पयोदध्याज्यसंयुतान् ॥ ९

केसरेष्वङ्गपूजा स्याद्दलेष्वन्यांस्तदाह्वयन् ॥ १०

रामभक्तो महातेजा कपिराजो महाबलः।
द्रोणाद्रिहारको मेरुपीठकार्चनकारकः ॥ ११

दक्षिणाशाभास्करश्च सर्वविघ्ननिवारकः।
एवं नामानि सम्पूज्य दलाग्रेषु च वानरान् ॥ १२

सुग्रीवमङ्गदं नीलं जाम्बवन्तं नलं तथा।
सुषेणं द्विविदं मैन्दं पूजयेद्दिक्पतीनपि ॥ १३

एवं सिद्धे मनौ मन्त्री स्वपरेष्टं प्रसाधयेत्।
कदलीबीजपूराम्रफलैर्हुत्वा सहस्रकम् ॥ १४

द्वाविंशतिब्रह्मचारिविप्रान्सम्भोजयेदथ।
एवं कृते महाभूतविषचौराद्युपद्रवाः ॥ १५

नश्यन्ति क्षणमात्रेण विद्वेषिग्रहदानवाः।
अष्टोत्तरशतं वारि मन्त्रितं विषनाशनम् ॥ १६

रात्रौ नवशतं मन्त्रं जपेद्दशदिनावधि।
यो नरस्तस्य नश्यन्ति राजशत्रूत्थभीतयः ॥ १७

अभिचारोत्थभूतोत्थज्वरे तन्मन्त्रितैर्जलैः।
भस्मभिः सलिलैर्वापि ताडयेज्ज्वरिणः क्रुधा ॥ १८

दिनत्रयाज्ज्वरान्मुक्तः स सुखं लभते नरः।
तन्मन्त्रितौषधं जग्ध्वा नीरोगो जायते ध्रुवम् ॥ १९

तन्मन्त्रितं पयः पीत्वा योद्धुं गच्छेन्मनुं जपन्।
तज्जप्तभस्मलिप्ताङ्गः शस्त्रसंघैर्न बाध्यते ॥ २०

शस्त्रक्षतं व्रणः शोफो लतास्फोटोऽपि भस्मना।
त्रिर्मन्त्रितेन संस्पृष्टाः शुष्यन्त्यचिरतो नृणाम् ॥ २१

वश्यादिप्रयोगाः-

सूर्यास्तमयमारभ्य जपेत्सूर्योदयावधि।
कीलकं भस्म चादाय सप्ताहावधि संयतः ॥ २२

निखनेद्भस्मकीलौ तौ विद्विषां द्वार्यलक्षितम्।
विद्वेषं मिथ आपन्नाः पलायन्तेऽरयोऽचिरात् ॥ २३

अभिमन्त्रितभस्माम्बुदेहचन्दनसंयुतम्।
खाद्यादियोजितं यस्मै दीयते स च दासवत् ॥ २४

क्रूराश्च जन्तवोऽनेन भवन्ति विधिना वशाः ।
ईशानदिक्स्थमूलेन भूतांकुशतरोः शुभाम् ।। २५
अंगुष्ठमात्रां प्रतिमां प्रविधाय हनूमतः ।
प्राणसंस्थापनं कृत्वा सिन्दूरैः परिपूज्य च ।। २६

गृहस्याभिमुखे द्वारे निखनेन्मन्त्रमुच्चरन् ।
भूताभिचारचौराग्निविषरोगनृपोद्भवाः ।। २७

सञ्जायन्ते गृहे तस्मिन्न कदाचिदुपद्रवाः ।
प्रत्यहं धनपुत्राद्यैरेधते तद्गृहं चिरम् ।। २८

निशि श्मशानभूमिस्थो भस्मना मृत्स्नयापि वा ।
शत्रोः प्रतिकृतिं कृत्वा हृदि नाम समालिखेत् ।। २९

कृतप्राणप्रतिष्ठां तां भिन्द्याच्छस्त्रैर्मनुं जपन् ।
मन्त्रान्ते प्रोच्चरेच्छत्रोर्नाम छिन्धि च भिन्धि च ।। ३०

मारयेति च तस्यान्ते दन्तैरोष्ठं निपीड्य च ।
पाण्योस्तले प्रपीड्यात्र त्यक्त्वा तां सदनं व्रजेत् ।। ३१

एवं सप्तदिनं कुर्वन्हन्याच्छत्रुं शिवावितम् ।
अर्धचन्द्राकृते कुण्डे स्थण्डिले वा हुतं चरेत् ।। ३२

मुक्तकेशः श्मशानस्थे लवणराजिकायुतैः ।
उन्मत्तफलपुष्पैश्च नखरोमविषैरपि ।। ३३

काककौशिकगृध्राणां पक्षैः श्लेष्मातकाक्षजैः ।
समिद्धरैश्च त्रिशतं दक्षिणाशामुखो निशि ।। ३४

सप्तघस्रानिदं कुर्वन्मारयेद्रिपुमुद्धतम् ।
शतषट्कं जपेद्रात्रौ श्मशाने दिवसत्रयम् ।। ३५

ततो वेताल उत्थाय वदेद्भावि शुभाशुभम्।
उदितं कुरुते सर्वं किङ्करीभूय मन्त्रिणः ॥ ३६

हनुमत्प्रतिमां भूमौ विलिखेत्तत्पुरो मनून्।
साध्यनाम द्वितीयान्तं विमोचय विमोचय ॥ ३७

तत्सर्वं मार्जयेद्वामहस्तेनाथ पुनर्लिखेत्।
एवमष्टोत्तरशतं लिखित्वा मार्जयेत्पुनः ॥ ३८

एवं कृते पराधीनो मुच्यते निगडात्क्षणात्।
एवं विद्वेषणादीनि कुर्यात्तत्पल्लवं लिखन् ॥ ३९

वश्यार्थे सर्षपैर्होमो विद्वेषे करवीरजैः।
कुसुमैरिध्मकाष्ठैर्वा जीरकैर्मरिचैरपि ॥ ४०

ज्वरे दूर्वागुडूचीभिर्दध्ना क्षीरेण वा घृतैः।
शूले होमः कुबेराक्षैरेरण्डसमिधा तथा ॥ ४१

तैलाक्ताभिश्च निर्गुण्डीसमिद्भिर्वा प्रयत्नतः।
सौभाग्ये चन्दनैश्चन्द्रैः रोचनैलालवङ्गकैः ॥ ४२

सुगन्धिपुष्पैर्वस्त्राप्त्यै तत्तद्धान्यैः तदाप्तये।
तत्पादरजसा राजीलवणाक्तेन मृत्यवे ॥ ४३

किम्बहूक्तैर्विषे व्याधौ शान्तौ मोहे च मारणे।
विवादे स्तम्भने द्यूतभूतभीतौ च सङ्कटे ॥ ४४

वश्ये युद्धे नृपद्वारे समरे चौरसङ्कटे।
मन्त्रोऽयं साधितो दद्यादिष्टसिद्धिं ध्रुवं नृणाम् ॥ ४५

हनुमद्यन्त्रम् - धारणाय

वक्ष्ये हनुमतो यन्त्रं सर्वसिद्धिप्रदायकम् ।
वलयत्रितयं लेख्यं पुच्छाकारसमन्वितम् ॥ ४६

साध्यनाम लिखेन्मध्ये पाशबीजप्रवेष्टितम् ।
उपर्यष्टदलं कृत्वा वर्मपत्रेषु संलिखेत् ॥ ४७

वलयं बहिरालिख्य तद्बहिश्चतुरस्रकम् ।
चतुरस्रस्य रेखाग्रे त्रिशूलानि समालिखेत् ॥ ४८

भूपुरस्याष्टवज्रेषु ह्सौबीजं तु लिखेत्ततः ।
कोणेष्वंकुशमालिख्य मालामन्त्रेण वेष्टयेत् ॥ ४९

तत्सर्वं वेष्टयेद्यन्त्रं वलयत्रितयेन च ।
वस्त्रे शिलायां फलके ताम्रपात्रेऽथ कुड्यके ॥ ५०

भूर्जे वो ताडपत्रे वा रोचनानाभिकुंकुमैः ।
यन्त्रमेतत्समालिख्य त्यक्ताशो ब्रह्चर्यवान् ॥ ५१

कपेः प्राणान्प्रतिष्ठाप्य पूजयेत्तं यथाविधि ।
सर्वदुःखनिवृत्त्यै तद्यन्त्रमात्मनि धारयेत् ॥ ५२

ज्वरमार्यभिचारघ्नं सर्वोपद्रवशान्तिकृत् ।
योषितामपि बालानां धृतं जनमनोहरम् ॥ ५३

मालामन्त्रः

मालामन्त्रमथो वक्ष्ये प्रणवो वाग्घरिप्रिया ।
दीर्घत्रयान्विता माया पूर्वोक्तं कूटपञ्चकम् ॥ ५४

तारो नमो हनुमते प्रकटान्ते पराक्रम।
आक्रान्तदिङ्मण्डलतोयशोवीति च तान च ॥ ५५

धवलीकृतवर्णान्ते जगत्त्रितयवज्र च।
देहज्वलदग्निसूर्यकोट्यन्ते तु समप्रभ ॥ ५६

तनूरुहपदं रुद्रावतारपदमीरयेत्।
लङ्कापुरीदहान्तेनोदधिलङ्घनवर्णकाः ॥ ५७

दशग्रीवशिरः पश्चात्कृतान्तकपदं ततः।
सीताश्वासनवाय्वन्ते सुतशब्दमुदीरयेत् ॥ ५८

अञ्जनागर्भसम्भूत श्रीरामान्ते तु लक्ष्मणा।
नन्दकान्ते रकपिचसैन्यप्राकारवर्णकाः ॥ ५९

सुग्रीवसख्यकावर्णा रणवालिनिबर्हण।
कारणद्रोणपर्वान्ते तोत्पाटनपदं वदेत् ॥ ६०

अशोकवनवीत्यन्तदारणाक्षकुमारक।
च्छेदनान्ते वनपदं रक्षाकरसमूह च ॥ ६१

विभञ्जनान्ते ब्रह्मास्त्रब्रह्मशक्तिग्रसेति च।
लक्ष्मणान्ते शक्तिभेदनिवारणपदं पुनः ॥ ६२

विशल्यौषधिवर्णान्ते समानयनवर्णकाः।
बालोदितान्ते भान्वन्ते मण्डलग्रसनेति च ॥ ६३

राक्षसीसंघवर्णान्ते विदारण च कुम्भ च। ६४

कर्णादिवधशब्दान्ते परायणपदं वदेत्। ६५

श्रीरामभक्तिशब्दान्ते तत्परेति समुद्र च ।
व्योमद्रुमलंघनेति महासामर्थ्यमिति च ॥ ६६

महातेजः पुंज वीत्यंते राजमानपदं पुनः ।
स्वामिवचनसम्पादितार्जुनान्ते च संयुगे ॥ ६७

सहायान्ते कुमारेति ब्रह्मचारिन्पदं वदेत् ।
गम्भीरशब्दोऽत्रिर्वायुर्दक्षिणाशापदं पुनः ॥ ६८

मार्तण्डमेरुशब्दांते सकलेति पदं वदेत् ।
पीठिकार्चनशब्दांते सकलेति पदं पुनः ॥ ६९

मन्त्रागमाचार्य्य मम सर्वग्रहविनाशन ।
सर्वज्वरोच्चाटनेति सर्वविषविनाशन ॥ ७०

सर्वापत्तिनिवारण सर्वदुष्टेति संपठेत् ।
निबर्हणपदं सर्वव्याघ्रादिभयतत्परम् ॥ ७१

निवारण सर्वशत्रुच्छेदनेति पदं मम ।
परस्य च त्रिभुवनपुंस्त्रीनपुंसकात्मकम् ॥ ७२

सर्वं जीवपदं पश्चाज्जातं वशययुग्मकम् ।
ममाज्ञाकारकं पश्चात्संपादय पदद्वयम् ॥ ७३

नानानामपदं धेयान्सर्वान्राज्ञः स संपठेत् ।
परिवारान्ममेत्यन्ते सेवकान्कुरु युग्मकम् ॥ ७४

सर्वशस्त्रास्त्रवीत्यन्ते षाणिविध्वंसयद्वयम् ।
मायादीर्घत्रयोपेताहात्रयं चैहियुग्मकम् ॥ ७५

विलोमपञ्चकूटानि सर्वशत्रून्हनद्वयम्।
परदान्तेलानि परसैन्यानि क्षोभयद्वयम्॥ ७६

मम सर्वकार्य्यजातं साधयद्वितयं ततः।
सर्वदुष्टदुर्जनान्ते मुखानि कीलयद्वयम्॥ ७७

घेत्रयं हात्रयं वर्मत्रितयं फट्त्रयं ततः।
वह्निप्रियांतो मन्त्रोयं मालासंज्ञोऽखिलेष्टदः॥ ७८

अष्टाशीत्यत्तराः पञ्चशतवर्णा (५८८)मनोः स्मृताः-।
महोपद्रवसंपाते स्मृतोऽयं दुःखनाशनः॥ ७९

पञ्चकूटमन्त्रः।
द्वादशार्णान्तिमान्वर्णान्षट्त्यक्त्वैकं तथादिमम्।
पञ्चकूटात्मको मन्त्रो निखिलाभीष्टसाधकः॥ ८०

मुनी रामोथ गायत्रीछन्दो देवः कपीश्वरः।
पञ्चबीजैःसमस्तेन षडंगं मुनिभिः स्मृतम्॥ ८१

रामदूतो लक्ष्मणांते प्राणदाताञ्जनासुतः।
सीताशोकविनाशोऽथ लंकाप्रासादभञ्जनः॥ ८२

हनूमदाद्याः पञ्चैते बीजाद्या ङेसमन्विताः।
षडंगमन्त्राःसंदिष्टा ध्यानपूजादिपूर्वकम्॥ ८३

(ॐ)(ऐं) (श्रीं)
एकादशाक्षरो मन्त्रः

तारो वाक्कमलामायादीर्घत्रयसमन्विताः (ह्रां ह्रीं ह्रूं)

पञ्चकूटानि मन्त्रोऽयं रुद्रार्णोऽभीष्टसिद्धिदः॥ ८४

(ह्स्फ्रें ख्फ्रें ह्स्रौं ह्स्ख्फ्रें ह्सौः)

अष्टादशाक्षरो मन्त्रः

अर्चना पूर्ववच्चास्य परो मन्त्रोऽभिधीयते।

हृदयं (नमः) भगवन्ङेन्तं (भगवते) आञ्जनेयमहाबलौ (आञ्जनेयाय महाबलाय)॥ ८५

तद्वद्वह्निप्रियांतोऽयं मनुरष्टादशाक्षरः।
मुनिरीश्वर एवास्यानुष्टुप्छन्दः समीरितम्॥ ८६

हनुमान्देवता बीजं हुं शक्तिर्वह्निवल्लभा।
आञ्जनेयो रुद्रमूर्तिर्वायुपुत्रस्तथैव च॥ ८७

अग्निगर्भो रामदूतो ब्रह्मास्त्रविनिवारणः।
एतैर्ङेन्तैःषडंगानि कृत्वा ध्यायेत्कपीश्वरम्॥ ८८

दहनतप्तसुवर्णसमप्रभं भयहरं हृदये विहिताञ्जलिम्।
श्रवणकुण्डलशोभिमुखाम्बुजं नमत वानरराजमिहाद्भुतम्॥ ८९

अयुतं प्रजपेन्मन्त्रं दशांशं जुहुयात्तिलैः।
वैष्णवे पूजयेत्पीठे पूर्ववत्कपिनायकम्॥ ९०

जितेन्द्रियो नक्तभोजी प्रत्यहं साष्टकं शतम्।
जपित्वा क्षुद्ररोगेभ्यो मुच्यते दिवसत्रयात्॥ ९१

भूतप्रेतपिशाचादिनाशायैवं समाचरेत्।
महारोगनिवृत्त्यै तु सहस्रं प्रत्यहं जपेत्॥ ९२

यताशनोऽयुतं नित्यं जपन्ध्यायन्कपीश्वरम्।
राक्षसौघं विनिघ्नंतमचिराज्जयति द्विषम्॥ ९३

सुग्रीवेण समं रामं संदधानं स्मरन्कपिम्।
प्रजप्यायुतमेतस्य सन्धिं कुर्य्याद्विरुद्धयोः ।। ९४

लङ्कां दहन्तं तं ध्यायन्नयुतं प्रजपेन्मनुम्।
शत्रूणां प्रदहेद् ग्रामानचिरादेव साधकः ।। ९५

प्रयाणसमये ध्यायन्हनूमन्तं मनुं जपन्।
यो याति सोऽचिरात्स्वेष्टं साधयित्वा गृहं व्रजेत्।। ९६

यः कपीशं सदा गेहे पूजयेज्जपतत्परः ।
आयुर्लक्ष्म्यौ प्रवर्धेते तस्य नश्यन्त्युपद्रवाः ।। ९७

शार्दूलतस्करादिभ्यो रक्षेन्मनुरयं स्मृतः ।
प्रस्वापकाले चौरेभ्यो दुष्टस्वप्नादपि ध्रुवम्।। ९८

पवनद्वितयं सद्योजातयुक्तं हनुपदम्।
महाकालः शशांकाढ्यः कामिकाफलकःक्रिया।। ९९

सनेत्राणां तमीनोगसातोगित आयुरा।
षलोहितं रुडाहेति वेदनेत्राक्षरो मनुः ।। (२४) १००

प्लीहनिवारको मन्त्रः

प्लीहरोगहरश्चास्य मुन्याद्यं पूर्ववन्मतम्।
प्लीहयुक्तोदरे स्थाप्यं नागवल्लीदलं शुभम्।। १०१

तदुपर्यष्टगुणितं वस्त्रमाच्छादयेत्ततः ।
वंशजं शकलं तस्योपरि मुञ्चेत्कपिं स्मरन्।। १०२

आरण्यप्रस्तरोत्पन्ने वह्नौ यष्टिं प्रतापयेत्।

बदरीतरुसंभूतां मन्त्रेणानेन सप्तशः ॥ १०३

तया संताडयेद्वंशं शकलं जठरस्थितम् ।
सप्तकृत्वःप्लीहरोगो नश्यत्येव नृणां क्षणात् ॥ १०४

(ॐ यो यो हनुमन्त फलफलित धगधगित आयुराषपरुडाह ॥)

पुच्छाकारे सुवसने लेखिन्या कोकिलोत्थया ।
अष्टगन्धैर्लिखेद्रूपं कपिराजस्य सुन्दरम् ॥ १०५

तन्मध्ये द्वादशार्णं तु शत्रुनामयुतं लिखेत् ।
तेन मन्त्राभिजप्तेन शिरोबद्धेन भूमिपः ॥ १०६

जयत्यरिगणं सर्वं दर्शनादेव निश्चितम् ।
विजयध्वजः
युद्धे जिगीषुर्नृपतिः पूर्वोक्तं लेखयेद्ध्वजे ॥ १०७

ध्वजमादायोपरागे संस्पर्शान्मोक्षणावधि ।
मातृकां जापयेत्पश्चाद्दशांशेन च हावयेत् ॥ १०८

सर्षपैस्तिलसंमिश्रैः संस्पर्शान्मोक्षणावधि ।
गजस्थं तं ध्वजं दृष्ट्वा पलायन्तेऽरयोऽचिरात् ॥ १०९

रक्षायन्त्रः

अथो हनुमतो यन्त्रं वक्ष्ये रक्षाविधायकम् ।
लिखेदष्टदलं पद्मं साध्याख्यायुतकर्णिकम् ॥ ११०

दलेष्वष्टार्णमालिख्य मालामन्त्रेण वेष्टयेत् ।
तद्बहिर्मायियावेष्ट्य प्राणस्थापनमाचरेत् ॥ १११

लिखितं स्वर्णलेखिन्या दले भूर्जतरोः शुभे ।
रोचनाकुंकुमाभ्यां तु वेष्टितं कनकादिभिः ॥ ११२

सम्पातसाधितं यन्त्रं भुजं वा मूर्ध्नि धारयेत् ।
रणे जयमवाप्नोति व्यवहारे दुरोदरे ॥ ११३

ग्रहैर्विघ्नैर्विषैः शस्त्रैश्चौरैर्नैवाभिभूयते ।
रोगान्सर्वानपाकृत्य चिरं जीवति भाग्यवान् ॥ ११४

अष्टाक्षरो मन्त्रः

वियदग्नियुतं दीर्घषट्काद्यं तारसम्पूटम् ।
अष्टार्णो मन्त्र आख्यातो मूलमन्त्रोऽथ कथ्यते ॥ ११५

(ओं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ओं)

मालामन्त्रोद्धारः

वज्रकायवज्रतुण्डकपिलेत्यथ पिंगल ।
ऊर्ध्वकेश महावर्ण बल रक्तमुखेति च ॥ ११६

तडिज्जिह्व महारौद्र दंष्ट्रोत्कटक हृद्वयम् ।
करालिने महादृढप्रहारिन्निति वर्णकाः ॥ ११७

लंकेश्वरवधायान्ते महासेतुपदं ततः ।
बन्धान्ते च महाशैलप्रवाहगगनेचर ॥ ११८

एह्येहि भगवन्नंते महाबलपराक्रम ।
भैरवाज्ञापयैह्येहि महारौद्रपदं पुनः ॥ ११९

दीर्घपुच्छेन वर्णान्ते वेष्टयान्ते तु वैरिणम् ।
भञ्जयद्वितयं फट्प्रणवादिसमीरितः ॥ १२०

बाणनेत्रेन्दु (१२५) वर्णोयं मालामन्त्रोऽखिलेष्टदः ।
युद्धे जप्तो जयं दद्याद्व्याधौ व्याधिविनाशनः ॥ १२१

(ॐ वज्रकाय वज्रतुण्ड कपिल पिङ्गल ऊर्ध्वकेश महाबल रक्तमुख तडिज्जिह्व महारौद्र दंष्ट्रोत्कटक ह ह करालिने महादृढप्रहारिन् लङ्केश्वरवधाय महासेतुबन्ध महाशैल प्रवाह गगनेचर एह्येहि भगवन् महाबलपराक्रम भैरवाज्ञापय एह्येहि महारौद्र दीर्घपुच्छेन वैरिणं भञ्जय भञ्जय हुं फट् ॥)

अष्टार्णमालामन्त्रोस्तु मुन्याद्यर्च्यं तु पूर्ववत् ।
भूरिणा किमिहोक्तेन सर्वं दद्यात्कपीश्वरः ॥ १२२

* * *

# श्री हनुमत्तन्त्रान्तर्गतमन्त्रसमुच्चयः

ॐ हं हनुमते नमः ॥ ॐ नमो भगवते हनुमते आञ्जनेयाय महाबलाय स्वाहा ॥ ॐ हं हनुमते मुख्यप्राणाय नमः ॥ ॐ हूं पवननन्दनाय हनुमते स्वाहा ॥ ॐनमो भगवते हनुमते सर्वभूतात्मने स्वाहा ॥ ॐ नमो हरिमर्कटमर्कटमहावीराय स्वाहा ॥ ॐ भूर्भुवःसुवः श्रीहनुमते नमः ॥ ॐ श्रीहनुमद्देवतायै नमः ॥ ॐ श्रीहनुमन्महारुद्राय नमः ॥ ॐ ह्रीं श्रीं ह्रौं ह्रां फट् स्वाहा । ओं हं नमो हनुमते रामदूताय रुद्रात्मकाय स्वाहा ॥ ॐ अञ्जनीसुताय महावीर्यप्रमथनाय महाबलाय जानकीशोकनिवारणाय श्रीरामचन्द्रकृपापादुकाय ब्रह्माण्डनाथाय कामदाय पञ्चमुखवीरहनुमते स्वाहा ॥

ॐ नमो भगवते आञ्जनेयाय आत्मतत्त्वप्रकाशाय स्वाहा ॥

ॐ ऐं ह्रां हनुमते रामदूताय किलिकिलिबुबुकारेण विभीषणाय नमो हनुमद्देवाय ।।

आञ्जनेयाय विद्महे महाबलाय धीमहि। तन्नो हनूमान् प्रचोदयात् ।।

ॐ नमो भगवते वीरहनुमते पीताम्बरधराय कर्णकुण्डलाद्या-भरणकृतभूषणाय वनमालाविभूषिताय कनकयज्ञोपवीतिने कौपीन-कटिसूत्रविराजिताय श्रीरामचन्द्रमनोभिलाषिताय लङ्कादहनकारणाय घनकुलगिरिवज्रदण्डाय अक्षकुमारप्राणहरणाय ॐ यं ॐ भगवते रामदूताय स्वाहा।

ॐ श्रीवीरहनुमते ह्रौं हूं फट् स्वाहा ।। ॐ श्रीवीरहनुमते स्फ्रें हूं फट् स्वाहा।। ॐ श्रीरामपादुकाधराय महावीराय वायुपुत्राय कनिष्ठाय ब्रह्मनिष्ठाय एकादशरुद्रमूर्तये महाबलपराक्रमाय भानुमण्डलग्रसन-ग्रहाय चतुर्मुखवरप्रदाय महाभयनिवारकाय ये ह्रौं ॐ स्फ्रें हं स्फ्रें हैं स्फ्रें ॐ वीर।

सर्वारिष्टशमनार्थम्-

ॐ नमो वीरहनुमते सर्वाण्यरिष्टानि सद्यः शमय शमय स्वाहा ।। ॐ वीराञ्जनेय भगवन् मम सर्वकार्याणि साधय साधय सर्वतो मां रक्ष रक्ष स्वाहा ।। ॐ महावीर हनुमन् सर्वयन्त्रतन्त्रमायाश्छेदय छेदय स्वाहा ।।

-रक्षणार्थम्

ॐ नमो हनुमते रुद्रावताराय वायुसुताय अञ्जनीगर्भसम्भूताय अखण्डब्रह्मचर्यपालनतत्पराय धवलीकृतजगत्त्रितयाय ज्वलदग्नि सूर्यकोटिसमप्रभाय प्रकटपराक्रमाय आक्रान्तदिङ्मण्डलाय यशो-

वितानाय यशोऽलंकृताय शोभिताननाय महासामर्थ्याय महातेजः पुञ्जविराजमानाय श्रीरामभक्तितत्पराय श्रीरामलक्ष्मणानन्दकारणाय कपिसैन्यप्राकाराय सुग्रीव सख्य कारणाय सुग्रीवसाहाय्यनिमित्ताय-ब्रह्मास्त्रब्रह्मशक्तिग्रसनाय लक्ष्मणशक्तिभेदनिवारणाय शल्यविशल्यौष-धिसमानयनाय बालोदितभानुमण्डलग्रसनोद्युक्ताय अक्षकुमारछेदनाय वनरक्षाकरसमूहविभञ्जनाय द्रोणपर्वतोत्पाटनाय स्वामिवचनसम्पादि-तार्जुनसंयुगसङ्ग्रामाय गम्भीरशब्दोदयाय दक्षिणाशामार्तण्डाय मेरुपर्व-रक्षकाय (मेरुपर्वतपीठिकार्चनाय दावानल कालाग्निरुद्राय समुद्रलंघनाय सीताश्वासनाय सीतारक्षकाय) राक्षसीसंघविदारणाय अशोकवनिका विध्वंसनाय (विदारणाय) लङ्कापुरदाहनाय दशग्रीवशिरःकृन्तनाय कुम्भकर्णादिवधकारणाय वालिनिबर्हणकारणाय मेघनादहोमविनाशकाय (विध्वंसनाय) इन्द्रजिद्वधकारणाय सर्वशास्त्रपारङ्गताय सर्वग्रह-निबर्हणाय (विनाशकाय) सर्वज्वरहराय सर्वभयनिवारणाय सर्वकष्ट-निवारणाय सर्वापत्तिनिवारणाय सर्वकार्यसाधकाय प्राणिमात्ररक्षकाय रामदूताय स्वाहा ॥

(सर्वत्र रक्षार्थम्)

ॐ नमो हनुमते रुद्रावताराय विश्वरूपाय अमितविक्रमाय प्रकटपराक्रमाय महाबलाय सूर्यकोटिसमप्रभाय रामदूताय स्वाहा ॥ ॐ नमो हनुमते रुद्रावताराय रामसेवकाय रामभक्तितत्पराय रामहृदयाय (लक्ष्मणशक्तिभेदनिवारणाय) लक्ष्मणरक्षकाय दुष्टनिबर्हणाय रामदूताय स्वाहा ॥

(वशीकरणार्थम्)

ॐ नमो हनुमते रुद्रावताराय सर्वशत्रुसंहारकाय सर्वरोगहराय सर्ववशीकरणाय रामदूताय स्वाहा ।।

(तापत्रयनिवारणार्थम्)

ॐ नमो हनुमते रुद्रावताराय आध्यत्मिकाधिदैविकाधिभौतिकतापत्रयनिवारणाय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय देवदानवर्षिमुनिवरदाय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय भक्तजनमनःकल्पनाकल्पद्रुमाय दुष्टमनोरथस्तम्भनाय प्रभञ्जनप्राणप्रियाय महाबलपराक्रमाय महाविपत्तिनिवारणाय पुत्रपौत्रधनधान्यादिविविधसम्पत्प्रदाय रामदूताय स्वाहा। ॐ नमो हनुमते रुद्रावताराय परयन्त्रमन्त्रतन्त्रत्राटकनाशकाय सर्वज्वरच्छेदकाय सर्वव्याधिनिकृन्तनाय सर्वभयप्रशमनाय सर्वदुष्टमुखस्तंम्भनाय सर्वकार्यसिद्धिप्रदाय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय वज्रदेहाय वज्रनखाय वज्ररोम्णे वज्रनेत्राय वज्रदन्ताय वज्रकराय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय देवदानवयक्षराक्षसभूतप्रेतपिशाचडाकिनीशाकिनीदुष्टग्रहबन्धनाय रामदूताय स्वाहा ।।

(पञ्चमुखहनुमत्तन्त्रतः)

ॐ नमो हनुमते रुद्रावताराय पञ्चवदनाय पूर्वमुखे सकलशत्रुसंहारकाय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावतारय पञ्चवदनाय दक्षिणमुखे करालवदनाय नारसिंहाय सकलभूतप्रेतदमनाय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय पञ्चवदनाय पश्चिममुखे

गरुडाय सकलविघ्ननिवारणाय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय पञ्चवदनाय उत्तरमुखे आदिवराहाय सकलसम्पत्कराय रामदूताय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय ऊर्ध्वमुखे हयग्रीवाय सकलजनवशीकरणाय रामदूताय स्वाहा ।।

(ग्रहोच्चाटनार्थम्)

ॐ नमो हनुमते रुद्रावताराय सर्वग्रहान् भूतभविष्यद्वर्तमानान् समीपस्थान् सर्वकालदुष्टबुद्धीनुच्चाटयोच्चाटय परबलानि क्षोभय क्षोभय मम सर्वकार्याणि साधय साधय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय परकृत यन्त्रमन्त्रपराहंकारभूतप्रेतपिशाचपरसृष्टिविघ्न-तर्जनचेटकविद्यासर्वग्रहभयं निवारय निवारय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय डाकिनीशाकिनीब्रह्मराक्षसकुलपिशाचोरुभयं निवारय निवारय स्वाहा ।।

(व्याधिनिवारणार्थम्)

ॐ नमो हनुमते रुद्रावताराय भूतज्वरप्रेतज्वरचातुर्थिकज्वर-विष्णुज्वरमहेशज्वरं निवारय निवारय स्वाहा ।। ॐ नमो हनुमते रुद्रावताराय अक्षिशूलपक्षशूलशिरोऽभ्यन्तरशूलपित्तशूलब्रह्म-राक्षसशूल पिशाचकुलच्छेदनं निवारय निवारय स्वाहा ।।

(भूतादिग्रहबन्धनार्थम्)

ॐ नमो भगवते वीरहनुमते प्रलयकालानलप्रभाज्वलनाय प्रताप-वज्रदेहाय अञ्जनागर्भसम्भूतायप्रकट विक्रमवीरदैत्यदानवयक्षरक्षो-गणग्रहबन्धनाय भूतग्रहनिबन्धनाय ब्रह्मबन्धनाय शाकिनीकामिनी-ग्रहबन्धनाय ब्रह्मराक्षसग्रहबन्धनाय चोरग्रहबन्धनाय मारिकाग्रह-

बन्धनाय एह्येहि आगच्छागच्छ आवेशयावेशय मम हृदयं प्रवेशय प्रवेशय स्वाहा ।। ॐ यं ह्रीं वायुपुत्राय एह्येहि आगच्छागच्छ आवेशयावेशय श्रीरामचन्द्र आवेशयावेशय श्रीरामचन्द्र आज्ञापयति स्वाहा ।।

(सर्वतो विजयार्थम्)

ॐ हूं हनुमते रुद्रात्मकाय हूं फट् स्वाहा ।। ॐ हं पवननन्दनाय हनुमते स्वाहा ।। ॐ ह्रीं यं ह्रीं रामदूताय रिपुपुरीदहनाय अक्षकुक्षिविदारणाय अपरिमितबलपराक्रमाय् रावणगिरिवज्रायुधाय ह्रीं स्वाहा ।।

ॐ भगवते अञ्जनापुत्राय उज्जयिनीनिवासिने गुरुतरपराक्रमाय श्रीरामदूताय लङ्कापुरीदाहनाय यक्षराक्षससंहारकारिणे हुं फट् स्वाहा।। ॐ श्रीं महाञ्जनेय पवनपुत्राऽवेशयाऽवेशय ॐ हनुमते फट् स्वाहा।।

(ज्ञानार्थम्)

ॐ नमो हनुमते मम मदनक्षोभं संहर संहर आत्मतत्वं प्रकाशय प्रकाशय हुं फट् स्वाहा ।।

(बन्धमोचनार्थम्)

ॐ हरि मर्कट वामकरे परिमुञ्च मुञ्च शृंखलिकां स्वाहा । ॐ यो यो हनूमन्त फलिफलिति धिगिधिगिति हर हर हूं फट् स्वाहा ।। ॐ नमो भगवते आञ्जनेयाय शृंखलां त्रोटय त्रोटय बन्धमोक्षं कुरु कुरु स्वाहा ।। ॐ नमो भगवते आञ्जनेयाय महाबलाय स्वाहा ।। ॐ नमो हनुमते आवेशयाऽवेशय स्वाहा ।। ॐ नमो हरिमर्कटाय स्वाहा। ॐ नमो रामदूताञ्जनेयाय वायुपुत्राय महाबलाय कोलाहलसकलब्रह्माण्ड-विश्वरूपाय सप्तसमुद्रनीरलंघनाय पिङ्गलनयनायामितविक्रमाय

दृष्टिनिरालंकृताय सञ्जीविनीसञ्जीविताङ्गदलक्ष्मण-महाकपिसैन्य-प्राणदाय रामेष्टाय स्वाहा ॥

(सम्पत्प्राप्त्यर्थम्)

ह्रीं ह्रीं ह्रूं ह्रौं ह्रः हनुमते श्रियं देहि दापय दापय ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः श्रीं स्वाहा ॥ ॐ नमो हनुमते रुद्रावताराय सकलसम्पत्कराय स्वाहा॥ ॐ पवननन्दनाय रमेराम रमेराम रमेरामाः ह्रीं श्रीं क्लीं ॐ स्वाहा॥ ॐ श्रीं ओं ह्रीं श्रीं ह्रीं क्लीं श्रीं वित्तेश्वराय हनुमद्देवताय श्रीं ह्रीं एं ॐ स्वाहा ॥

(स्वप्नदृष्टान्तार्थम्)

ॐ शिव हरि मर्कट मर्कटाय स्वाहा ॥ ॐ हरि मर्कट मर्कटाय स्वप्नं दर्शय दर्शय ॐ स्वाहा ॥

(भयनाशनार्थम्)

ॐ नमो भगवते सप्तवदनाय आद्यकपिमुखाय वीर हनुमते सर्वशत्रुसंहारणाय ठं ठं ठं ठं ठं ठं ठं ॐ नमः स्वाहा ॥ ॐ नमो भगवते सप्तवदनाय द्वितीय नारसिंहास्याय अत्युग्रतेजोवपुषे भीषणाय भयनाशनाय हं हं हं हं हं हं हं ॐ नमः स्वाहा ॥ रं हरिमर्कट हरिमर्कट भूतप्रेतब्रह्मराक्षसवेतालादि नाशय नाशय मर्कट मर्कटाय हरि हूं फट् ॥ ॐ नमो हनुमते अञ्जनीगर्भसम्भूताय रामलक्ष्मणानन्दकराय कपिसैन्य-प्रकाशनाय पर्वतोत्पाटनाय सुग्रीवामात्याय रणपरोद्धाटनाय कुमारब्रह्म-चारिणे गम्भीरशब्दोदयाय ॐ ह्रां ह्रीं ह्रूं सर्वदुष्टनिवारणाय सर्वभूतप्रेत-डाकिनीशाकिनीनिवारणाय ॐ ह्रां ह्रीं ह्रूं फट् ॥

(वादविजयार्थम्)

ॐ नमो भगवते आञ्जनेयाय महाबलाय स्वाहा ।

(वेतालसिद्ध्यर्थम्)

हौं ह्स्फ्रं ख्फ्रों ह्सों ह्स्ख्फ्रों ह्सौः हनुमते नमः ॥

(रक्षार्थम्)

अञ्जनीगर्भसम्भूताय कपीन्द्रसचिवोत्तम रामप्रिय नमस्तुभ्यं हनुमन् रक्ष रक्ष सर्वदा ॥

(बन्धमोक्षार्थम्)

ॐ हरि मर्कट मर्कटाय बन्धमोक्षं कुरु स्वाहा ॥

(दृष्टिदोषपरिहारार्थम्)

ॐ रं मङ्गल ॐ ॥ हं हनुमते रुद्रात्मकाय हूं फट् ॥ ॐ नमो हनुमते रुद्रावताराय परमन्त्रपरयन्त्रपरतन्त्र मूढघातत्राटकचेटक-नाशाय सर्वज्वरच्छेदकाय सर्वव्याधिनिकृन्तानाय सर्वभयप्रशमनाय सर्वदुष्टमुखस्तम्भनाय सर्वकार्यसिद्धिप्रदाय रामदूताय हुं हुं हुं फट् फट् ॥

(हनुमद्गायत्री) रामदूताय विद्महे वायुपुत्राय धीमहि। तन्नो हनुमान् प्रचोदयात् ॥

(सामर्थ्याविाप्त्यर्थं)

ॐ हां हीं हूं हैं हौं वज्रकायाय लङ्केश्वरवधाय महासेतुबन्धाय महाशैल प्रवाह गगनेचर एह्येहि महाबलपराक्रमाय भैरवायाज्ञापय एह्येहि महारौद्र दीर्घपुच्छेन वेष्टय वैरिणो भञ्जय हूं फट् ॥

(षट्कर्मसिद्ध्यर्थम्)

(आकर्षणार्थम्) ॐ नमो मर्कट मर्कटाय लुं लुं लुं लुं लुं लुं लुं - आकर्षितसकल सम्पत्कराय हरि मर्कट मर्कटाय ॐ ॥

( वशीकरणार्थम्) ॐ नमो हनुमते ऊर्ध्वमुखाय हयग्रीवाय रुं रुं रुं रुं रुं रुं रुं रुद्रमूर्तये प्रयोजननिर्वाहकाय स्वाहा ।।

(मारणार्थम्) रं ह्रां रं ह्रीं रं ह्रूं रं ह्रैं रं ह्रौं रं ह्रः रुद्रावताराय शत्रुसंहारणाय रं ह्रां रं ह्रीं रं ह्रूं रं ह्रैं रं ह्रौं रं ह्रः फट् स्वाहा ।।

(विद्वेषणार्थम्) ॐ हरि मर्कट मर्कटाय बं बं बं बं बं अमुकामुकं विद्वेषय विद्वेषय हूं फट् ।।

(स्तम्भनार्थम्) ॐ नमो हनुमते पञ्चवदनाय टं टं टं टं टं अमुकं स्तम्भय स्तम्भय टं टं टं टं टं हूं फट् ।।

(मोहनार्थम्) ॐ ऐं श्रीं ह्रां ह्रीं हूं ह्स्फ्रें ह्स्फ्रें ह्स्रौं ओं हनुमते अमुकं मोहय मोहय हुं फट् ।।

(त्रिदोषसंनिपातनिवृत्त्यर्थम्) ॐ हनुमते श्रीरामदूताय नमः ।

आपदामपहर्तारं दातारं सर्वसम्पदाम् ।

लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम् ।

(हार्दचक्रजागरणार्थम्) गुरवे मम अञ्जनीसूनवे नमः ।।

(सर्वमनोरथपूरणार्थम्) ॐ नमो भगवते महावीराय श्रीमते सर्वकामप्रदाय हुं स्वाहा ।।

असाध्यसाधक स्वामिन् असाध्यं तव किं वद।

रामदूत महोत्साह ममाभीष्टं प्रसाधय ।।

* * *

# श्रीहनुमदष्टादशाक्षरमन्त्रजपविधानम् ।

ॐ नमो भगवते आञ्जनेयाय महाबलाय स्वाहा ।।

अस्य मन्त्रस्य ईश्वर ऋषिः अनुष्टुप् छन्दः । हनुमान् देवता । हुं बीजम् । स्वाहा शक्तिः । सर्वेष्टसिद्धये जपे विनियोगः ।

ध्यानम्

ॐ दहनतप्तसुवर्णसमप्रभं भयहरं हृदये विहिताञ्जलिम् ।
श्रवणकुण्डलशोभिमुखाम्बुजं नमत वानरराजमिहाद्भुतम् ।।

षडङ्गन्यासवन्दनम्- ॐ आञ्जनेयाय नमः । ॐ रुद्रमूर्तये नमः । ॐ वायुपुत्राय नमः । ॐ अग्निगर्भाय नमः । ॐ रामदूताय नमः । ॐ ब्रह्मास्त्रनिवारकाय ममः ।

दिशावन्दनम्- ॐ रामभक्ताय नमः । ॐ महातेजसे नमः । ॐ कपिराजाय नमः । ॐ महाबलाय नमः । ॐ द्रोणाद्रिहारकाय नमः । ॐ मेरुपीठार्चनकारकाय नमः । ॐ दक्षिणाशाभास्कराय नमः । ॐ सर्वविघ्ननिवारकाय नमः ।

परिवारवन्दनम्- ॐ सुग्रीवाय नमः । ॐ अङ्गदाय नमः। ॐ नीलाय नमः । ॐ जाम्बवते नमः । ॐ नलाय नमः । ॐ सुषेणाय नमः । ॐ द्विविदाय नमः । ॐ मैन्दाय नमः ।

यन्त्रस्थापना ।।

संविन्मय प्रभो देव परामृतरसप्रिय ।

अभीष्टं मम देहि त्वं शरणागतवत्सल।।

ॐ नमो भगवते हनुमते सर्वभूतात्मने हनुमते सर्वात्मसंयोग-पद्मपीठात्मने नमः ॥

काम्यमन्त्रयोगफलानि -

जपित्वा क्षुद्ररोगेभ्यो मुच्यते दिवसत्रयात्।
भूतप्रेतपिशाचादिनाशाय च समाचरेत्।
महारोगनिवृत्त्यै च मुच्यते दिवसत्रयात्।

एकाशनोऽयुतं नित्यं जपन्ध्यायन्कपीश्वरम्।
राक्षसौघं विनिघ्नन्तं अचिराज्जयति द्विषः ॥

लङ्कां दहन्तं निध्यायन्नयुतं प्रजपेन्मनुम्।
शत्रूणां प्रदहेद् ग्रामानचिरादेव साधकः ॥

यः कपीशं सदा गेहे पूजयेज्जपतत्परः ।
आयुर्लक्ष्म्यौ प्रवर्धेते तस्य नश्यन्त्युपद्रवाः ॥

शार्दूलतस्करादिभ्यो रक्षेन्मनुरयं स्मृतः ।
प्रस्वापकाले चौरेभ्यो दुष्टस्वप्नादपि ध्रुवम्॥

* * *

# विश्वलोचनचक्रपूजा

ॐ नमो भगवते हनुमते रुद्रावताराय महाबलाय आञ्जनेयाय वायुपुत्राय कोसलेन्द्रानुचराय साम्प्रतं स्वात्मानं दर्शय सत्यं वद वद स्वाहा ह्रां ह्रां ॐ ॥ इति मन्त्रः ।

ॐ अस्य श्रीविश्वलोचनचक्रराजहनुमन्महामन्त्रस्य अगस्त्यऋषिः अतिजगतीच्छन्दः । कोसलेन्द्रानुचरो महेश्वरो

हनुमान्देवता। हां बीजम्। स्वाहा शक्तिः। नमः कीलकम्। स्वात्मदर्शने विनियोगः।

ऋष्यादिन्यासः ॥ ॐ अगस्त्यऋषये नमः। शिरसि। ॐ अतिजगतीच्छन्दसे नमः। मुखे। ॐ कोसलेन्द्रानुचराय महेश्वराय हनुमते देवतायै नमः हृदि। ॐ हां बीजाय नमः गुह्ये। ॐ स्वाहा शक्तये नमः। पादयोः। ॐ नमः कीलकाय नमः। नाभौ। ॐ स्वात्मदर्शनविनियोगाय नमः सर्वाङ्गे॥

हृदयादिषडङ्गन्यासः। ॐ नमो भगवते हां हनुमते हृदयाय नमः। ॐ रुद्रावताराय महाबलाय हीं हनुमते शिरसे स्वाहा। ॐ आञ्जनेयाय वायुपुत्राय हूं हनुमते शिखायै वषट्। ॐ कोसलेन्द्रानुचराय हैं हनुमते कवचाय हुम्। ॐ साम्प्रतं स्वात्मानं दर्शय दर्शय हौं हनुमते नेत्रत्रयाय वौषट्। ॐ सत्यं वद वद स्वाहा हां हां ॐ हः हनुमते अस्त्राय फट्। ध्यानम्। मनोजवं मारुततुल्यवेगं यतेन्द्रियं बुद्धिमतां वरिष्ठम्। वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि॥

पीठदेवताप्रतिष्ठा।

ओं मं मण्डूकादिपरतत्त्वपीठ देवताभ्यो नमः। ॐ विमलायै नमः। ॐ ज्ञानायै नमः। ॐ क्रियायै नमः। ॐ योगायै नमः। ॐ प्रह्वायै नमः। ॐ सत्यायै नमः। ॐ ईशानायै नमः। मध्ये। ॐ अनुग्रहायै नमः।

ॐ नमो भगवते रुद्राय सर्वभूतात्मने हनुमते सर्वात्मसंयोगपद्म-पीठात्मने नमः॥ इति हनुमन्तं पीठे निधाय।

ॐ सविन्मय परो देव परामृतरसप्रिय।

अनुज्ञां हनुमन् देहि परिवारार्चनाय मे ।। इति पुष्पाञ्जलिं दयात् ।

आवरणपूजा ।।

(मध्ये) ॐ रां रामाय नमः । रामश्रीपादुकां पूजयामि तर्पयामि नमः । (पूर्वे) ॐ हां हनुमते नमः हनुमच्छ्रीपादुकां पूजयामि तर्पयामि नमः । (ईशान्ये) ॐ सं सुग्रीवाय नमः सुग्रीवश्रीपादुकां पूजयामि तर्पयामि नमः । (आग्नेये) ॐ लं लक्ष्मणाय नमः । लक्ष्मणश्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ अभीष्टसिद्धिं में देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।।

ॐ अणिमायै नमः । अणिमाश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ महिमायै नमः । महिमाश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ गरिमायै नमः । गरिमाश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ लघिमाये नमः । लघिमाश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ प्राप्त्यै नमः । प्राप्तिश्रीपादुकां पूजयामि तर्पयामि नमः । ॐ प्राकाम्यायै नमः। प्राकाम्य श्रीपादुकां पूजयामि तर्पयामि नमः । ॐ ईशितायै नमः । ईशिता-श्रीपादुकां पूजयामि तर्पयामि नमः । ॐ वशितायै नमः । वशिता-श्रीपादुकां पूजयामि तर्पयामि नमः ।

ॐ अभीष्टसिद्धिं में देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।

ॐ विजयध्वजाय नमः । ॐ सिंहध्वजाय नमः । ॐ हलध्वजाय नमः । ॐ सुषेणाय नमः । ॐ भद्रसेनाय नमः । ॐ जयसेनाय नमः । ॐ विजयसेनाय नमः । ॐ गोमुखाय नमः । ॐ दधिमुखाय नमः । ॐ जडलाङ्गूलाय नमः । ॐ महीलाङ्गूलाय नमः । ॐ कालाय नमः । ॐ

महाकालाय नमः । ॐ वज्रसाराय नमः ॐ महासाराय नमः । ॐ मकरध्वजाय नमः ।

ॐ अभीष्टसिद्धिं में देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

इतः परं वृत्ते मातृकाक्षराणि द्वारेषु दिक्पतितदायुधपूजा च-

इत्यावरणपूजां कृत्वा धूपादिना संपूज्य स्तोत्रादिना हनूमन्तं स्तुत्वा मालां संस्कृतामादाय हृदये धारयन् मौनी एकाग्रचित्तः भूत्वा मूलमन्त्रं जपति ॥)

अस्य मन्त्रस्य पुरश्चरणमेकलक्षजपः । बदलघृतैः दशांशतो होमः । तद्दशांशेन त्रिमधुभिः (मधुघृतशर्कराभिः) तर्पणम् । तद्दशांशेन गन्धवारिभिः मार्जनम् । तद्दशांशेन मोदकैः पायसेन वा ब्राह्मणभोजनम् । इति मन्त्रसिद्धिः ॥

दीपपूजा- शुक्र-शनि-भौमवासरे घृतदीपं स्वर्णादिपात्रे सुगन्ध-वर्त्या संयोज्य ॐ हनुमद्दीपाय नमः इति दीपं संपूज्य प्रज्वाल्य कज्जलं पाययेत् ।

ॐ हनुमदञ्जनाय नमः । इति कज्जलं संपूज्य ततः विशाले शोभने पात्रे द्व्यंगुलं वर्तुलं तदुपरि चतुरङ्गलं चक्रवालं अलक्तकेन विधाय, तत्राद्यमण्डले सुगन्धेन स्नेहेन कज्जलं संयोज्य तदुपरि मण्डलं कुंकुमेन संलिप्य भूर्जपत्रे मूलमन्त्रं लिखित्वा, मन्त्रान्तरे च पत्रान्तरयोः स्थाननिरूपक तगरादीन् अगरु कर्पूरकल्केन निरूपयेत् तदग्रे यन्त्रं लिखित्वा तेषां मूलमन्त्रेण षोडशोपचारैः सम्पूजयेत् ॥

ॐ जयत्यतिबलो रामो लक्ष्मणश्च महाबलः । राजा जयति सुग्रीवो

हनुमान्कार्यसाधकः ।। इति वा मन्त्रेण सम्पूजनम् ।।

ततः स्नातं शुद्धं अखण्डितब्रह्मचर्यं अदूषितं वटुं आनीय तत्र संस्थाप्य तस्य मन्त्रं श्रावयेत् पूजां च कारयेत्। ततः गोघृतेन तैलेन वा दीपं प्रज्वाल्य शुचिः प्रयतः साधकः मौनेन अष्टोत्तरशतवारं मूलमन्त्रं जपेत् ।

ततो वटुं समुत्थाप्य दीपकेन स्पृष्टं कृत्वा मेचकमण्डले नेत्रं दत्वा दीपं पश्येत्। तत्र मन्त्रत्रयं जपेत्। हुं इति उच्चरन् वटुं पृच्छेत् - किं पश्यसि?' इति। एवं पुनः पुनः पृच्छेत् ।।

वटुः पूर्वं तेजोमण्डलं पश्यति । तत उत्तरं तत उपवेशनम् । ततः प्रभाम् । ततः समयदेवताः । ततः सिंहासनम् । अनन्तरं अनुक्रमं हनूमन्तं, सुग्रीवं, लक्ष्मणं, श्रीरामं च पश्यति । ततः स्वचिन्तितं कार्यं यजमानः वटवे श्रावयेत् । वटुः कृताञ्जलिर्भूत्वा 'भगवन् हनुमन् मया निवेदितं कार्यं कृपया वदतु भवान् ।' इति ब्रूयात् । तद्भाषितं श्रुत्वा यजमानः गुरवे निवेदयेत् । तेन सिद्ध्यसिद्धी जानीयात् ।

यदा तु वटुः किमपि न पश्यति, अन्यथा वा पश्यति गिरि-समुद्र-यक्ष राक्षस-नर-नारी-पशु-पक्षिगणं पश्यति, तदपि तदा शुभाशुभं तद्रूपेण जानीयात् । यद्यनिष्टं पश्यति तदा यन्त्रं वटुशिरसि निधाय मन्त्रं जप्त्वा पुनः 'किं पश्यसि' इति तं पृच्छेत् । ततः इष्टं पश्यति । अनन्तरं कार्यं पृच्छेत् । चोर- जार-नारी-द्यूतादीनां प्रश्नं न कुर्यात् ।।

शान्त्यर्थं श्वेतवस्त्रमाल्यनैवेद्योपचारैः तुष्टिं कुर्यात् । इतरे रक्तवस्त्राणि धारयेयुः । कार्यसिद्धिर्भवति । प्रश्नवेला अर्धरात्रिरेव ।।

इत्यगस्त्यसंहितायां विश्वलोचनचक्रपूजाविधानं समाप्तम् ।।

* * *

# जय मारुते !

ओं नमो वायुपुत्राय भीमरूपाय धीमते ।
नमस्ते रामदूताय कामरूपाय श्रीमते ॥ १

मोहशोक विनाशाय सीताशोकविनाशिने ।
भग्नाशोकवनायास्तु दग्धलङ्काय वाग्मिने ॥ २

गतिनिर्जितवाताय लक्ष्मणप्राणदाय च ।
वनौकसां वरिष्ठाय वशिने वनवासिने ॥ ३

तत्त्वज्ञानसुधासिन्धुनिमग्नाय महीयसे ।
आञ्जनेयाय शूराय सुग्रीवसचिवाय ते ॥ ४

जन्ममृत्युभयघ्नाय सर्वक्लेशहराय च ।
नेदिष्ठाय प्रेतभूत पिशाच भयहारिणे ॥ ५

यातनानाशनायास्तु नमो मर्कटरूपिणे ।
यक्षराक्षसशार्दूल सर्पवृश्चिकभीहृते ॥ ६

महाबलाय वीराय चिरञ्जीविन उद्धते ।
हारिणे वज्रदेहाय चोल्लङ्घितमहाब्धये ॥ ७

बलिनामग्रगण्याय नमो नमः पाहि मारुते ।
लाभदोऽसि त्वमेवाशु हनुमान् राक्षसान्तक ।
यशो जयं च मे देहि शत्रून्नाशय नाशय ॥ ८

—श्री वासुदेवानन्दसरस्वती ।

सङ्गीतेन वशीकरोति वरदं क्ष्माजाधवं राघवं
यश्चामीकरचारुगात्रसुषमां विस्तारयत्यद्भुताम् ।

नानातालकलाकलापनिपुणः कौशान्यवद्गायति
स प्रीणातु प्रशस्तगानरसिकव्यामोदिशाखामृगः ॥ ९
—सङ्गीतपारिजततः ।

दक्षिणो लक्ष्मणो यस्य वामे च जनकात्मजा ।
पुरतो मारुतिर्यस्य तं वन्दे रघुनन्दनम् ॥ १०
—रामराक्षास्तोत्रतः ।

मारुतिं वीरवज्राङ्गं भक्तरक्षणदीक्षितम् ।
हनुमन्तं सदा वन्दे राममन्त्रप्रचारकम् ॥ ११

हनुमन्नञ्जनासूनो वायुपुत्र महाबल ।
अकस्मादागतोत्पातं नाशयाशु नमोऽस्तु ते ॥ १२
—कुतोऽपि

उद्यन्मार्तण्ड तेजः प्रसरपरिगतारक्तमेरुप्रभाभं
वज्रप्रान्तानुकारि प्रखरनखमुखाघात सन्दारितारिम् ।
लोलल्लाङ्गूल लीलालुलित खलदलोद्दाम दर्पान्धनाकं
कालं क्रूरग्रहाणां शतभयशमनं नौमि वायोः सुबालम् ॥ १२

धीरं धीरं धरित्रीं पदकमलमुखन्याससंपीड्यन्तं
निकाणैर्नाशयन्तं निखिलकलिमलं तालजैः कङ्कणानाम् ।
गायन्तं राम रामेत्यतिरतिरभसैः राघवं संस्मरन्तं
सङ्गीताचार्यवर्यं कविकुलतिलकं मारुतिं नौमि वीरम् ॥ १४

कूर्मो मूलवदालवालवदपां नाथो लतावद्दिशो
मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः ।

स्वामिन्! व्योमतरुर्मम क्रमतले श्रुत्वेति गां मारुतेः
सीतान्वेषणमादिशन् दिशतु वो राम: सहर्ष: श्रियम्।। १५

—हनुमन्नाटकतः

खड्गं त्रिशूलं खट्वाङ्गं पाशमङ्कुशपर्वतम्।
ध्रुवमुष्टिगदामुण्डं दशभिः कपिपुङ्गवम्।।
एतान्यायुधजालानि धारयन्तं यजामहे।। १६

—श्री विद्यार्णवतः

स्वप्रभोर्वाहकश्रेष्ठः श्वेतच्छत्रितपुच्छकः।
सुखासनमहापृष्ठः सेतुबन्धक्रियाग्रणीः।। १७

कदाऽपि शुभ्रैर्वरचामरैः प्रभुं
गायन् गुणान्वीजयति स्थितोऽग्रतः।
कदाऽप्युपश्लोकयति स्वनिर्मितैः
चित्रैः स्तवैः श्री हनुमान्कृताञ्जलिः।। १८

—बृहद्भागवतामृततः

नखायुधाय भीमाय दन्तायुधधराय च।
विहगाय च शर्वाय वज्रदेहाय ते नमः।। १९

ज्वलत्काञ्चन वर्णाय दीर्घलाङ्गूलधारिणे।
सौमित्रिजयदात्रे च रामदूताय ते नमः।। २०

—नारदपुराणतः

द्विभुजं स्वर्णवर्णाभं रामसेवापरायणम्।
मौञ्जीकौपीनसहितं मां ध्यायेद्रामसेवकम्।। २१

—रामरहस्योपनिषदि

श्री विष्णोः श्रवणे परीक्षिदभवद्वैयासकिः कीर्तने
प्रह्लादः स्मरणे, तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने।
अक्रूरस्त्वभिनन्दने कपिपतिर्दास्येऽथ सख्येऽर्जुनः
सर्वस्वात्मनिवेदने बलिरभूत् कृष्णाप्तिरेषां परम्॥ २२

शौर्यं दाक्ष्यं बलं धैर्यं प्राज्ञता नयसाधनम्।
विक्रमश्च प्रभावश्च हनूमति कृतालयाः॥ (७.३५) २३

तेजो धृतिर्यशो दाक्ष्यं सामर्थ्यं विनयो नयः।
पौरुषं विक्रमो बुद्धिः यस्मिन्नेतानि नित्यदा।
हनुमांस्तेन हारेण शुशुभे वानरर्षभः॥ (६.१२७) २४

यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव।
धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति॥ (५.१) २५

—वाल्मीकि रामायणतः।

मरुत्सुतं रामपदारविन्दवन्दारु बृन्दारकमाशु वन्दे।
धीशक्तिभक्ति द्युतिसिद्धयो यं कान्तां स्वकान्तामिव कामयन्ते॥ २६

—रामचरिताब्धिरत्नतः।

स्फटिकाभं स्वर्णकान्तिं द्विभुजं च कृताञ्जलिम्।
कुण्डलद्वयसंशोभिमुखाम्बुजमहं भजे॥ २७

हनूमान् रामपादाब्जसङ्गी वर्णिवरः शुचिः।
सञ्जीवनोपहर्ता मे दीर्घमायुर्ददात्विह॥ २८

—श्रीतत्त्वनिधितः।

सदा राम रामेति नामामृतं ते सदाराममानन्दनिष्यन्दकन्दम्।
पिबन्तं नमन्तं सुदन्तं हसन्तं हनूमन्तमन्तर्भजे तं नितान्तम्॥ १९

—भगवत्पादानां रामभुजङ्गतः

# हनुमत्पञ्चरत्नस्तोत्रम्

शंशंशंसिद्धनाथं प्रणमति चरणं वायुपुत्रं च रौद्रं
वंवंवंविश्वरूपं हहहहहहसितं गर्जितं मेघक्षत्रम्।
तंतंत्रैलोक्यनाथं तपति दिनकरं तं त्रिनेत्रस्वरूपं
कंकंकन्दर्पवश्यं कमलमनहरं शाकिनीकालरूपम्॥ १

रंरंरंराम दूतं रणगजदमितं रावणच्छेददक्षं
बंबंबंबालरूपं नतगिरिचरणं कम्पितं सूर्यबिम्बम्।
मंमंमंमन्त्रसिद्धिं कपिकुलतिलकं मर्दनं शाकिनीनां
हुंहुंहुंकारबीजं हनति हनुमतं हन्यते शत्रुसैन्यम्॥ २

दंदंदंदीर्घरूपं धरकरशिखरं पातितं मेघनादं
ऊँऊँउच्चाटितं वै सकलभुवतलं योगिनी वृन्दरूपम्।
क्षंक्षंक्षं क्षिप्रवेगं क्रमति च जलधिं ज्वालितं रक्षदुर्गं
क्षेक्षेंक्षें क्षेमतत्वं दनुरुहकुलं मुच्यते बिम्बकारम्॥ ३

कंकंकंकालदुष्टं जलनिधितरणं राक्षसानां विनाशे
दक्षं श्रेष्ठं कवीनां त्रिभुवनचरतां प्राणिनां प्राणरूपम्।
ह्वांह्वांह्वांह्वांसतत्वं त्रिभुवनरचितं दैवतं सर्वभूते
देवानां च त्रयाणां फणिभुवनधरं व्यापकं वायुरूपम्॥ ४

त्वंत्वंत्वंवेदत्व बहुऋचयजुषं सामचाऽथर्वरूपं
कंकंकंकन्दने त्वं ननु कमलतजे राक्षसान् रौद्ररूपान्।
खंखंखंड्गहस्तं झटिति भुवितले त्रोटितं नागपाशम्
ॐऊँऊँकाररूपं त्रिभुवनपठितं वेदमन्त्राधिमन्त्रम्॥ ५

संग्रामे शत्रुमध्ये जलनिधितरणे व्याघ्रसिंहे च सर्पे राज-
द्वारे च मार्गे गिरिगुहविवरे चोषरे कन्दरे वा ।
भूतप्रेतादियुक्ते ग्रहगणविषये शाकिनीडाकिनीनां
देशे विस्फोटकानां ज्वरवमन शिरः पीडने नाशकस्त्वम् ।। ६

—*—

